इति विकसितैकैकेन प्राग्दलेन सरोजिनी
जनयति मतिं साक्षात्कर्तुं जनस्य दिनोदये॥ २८॥
तटतरुखगश्रेणीसाराविणैरिव साम्प्रतं
सरसि विगलन्निद्रामुद्राऽजनिष्ट सरोजिनी।
अधरसुधया मध्ये मध्ये वधूमुखलब्धया
धयति मधुपः स्वादुङ्कारं मधूनि सरोरुहां॥ २९॥

भोक्तुं अनुभवितुमथ च भक्षयितुं प्रवृत्ततया कृतप्रारम्भतया हेतुभूतया पुनर्भोजनादावन्नायामृतकरणार्थमापोशानसोपस्करणमन्त्रोदकस्य ग्रहार्थं कलितो बद्धमुकुलकः प्रकृतिविशेषो यथा एवम्भूता किमु। भोजने प्रवृत्तेनापोशनक्रियापूर्व्वमादावन्ते च भोक्तव्यमिति स्मृतेः। अपोशानग्रहीता करकमले एकां कनिष्ठामङ्गुलिं प्रसारयति अन्यास्तु संकोचयतीति संप्रदायः। कमलविकाससमयो जातस्तस्मादुद्बुध्यस्वेति भावः॥ २८॥

तटेति॥ साम्प्रतं सरसि सरोजिनी सरस्तटे तरुषु वर्त्तमानानां खगश्रेणीनां साराविणैर्मिलितैः कलकलशब्दैरिव विगलन्ती भ्रश्यन्ती निद्रैव मुद्रा कोरकबन्धो यस्याः, यद्वा विगलन्ती निद्रायाः सङ्कोचस्य मुद्रा भङ्गी यस्याः सा त्यक्तनिद्रोन्मीलितकमललोचनेवाजनिष्ट जाता। कलकलेन च निद्रितस्य निद्रा अपयाति। तथा मधुपो भ्रमरः सरोरुहां मधूनि कमलमकरन्दान् वध्वाः भ्रमर्याः मुखात् लब्धयाऽधरसुधया ओष्ठगतपीयूषेण मध्ये मध्ये स्वादुङ्कारं स्वादूनि माधुर्यातिशय-

गतचरदिनस्यायुर्भ्रंशे दयोदयसङ्कुच-
त्कमलमुकुलक्रोडानीडप्रवेशमुपेयुषां।
इह मधुलिहां भिन्नेष्वम्भोरुहेषु समायतां
सह सहचरैरालोकयन्तेऽधुना मधुपारणाः॥ ३०॥

युक्तानि कृत्वा धयति पिबति। कमलानि विकसितानि भ्रम-
राश्च तन्मधूनि भ्रमर्य्यंधरञ्च पिबन्तीत्यर्थः। मधुप इति मा-
भिप्रायं मधुपा अप्येतादृशा भवन्ति। समन्ताद्रावाः सांरा-
विणानि आभिविधौ भाव (पा॰३।३।४४) इतीनुणं तात्
स्वार्थं अणिनुण इत्यण् (पा॰५।४।१५)। स्वादुङ्कारं स्वादुमिण
मुल् (पा॰३।४।२६)। मान्तत्वञ्च पूर्व्वस्य स्वादुमीति निर्द्दे-
शात्॥ २९॥

गतेति॥ गतचरदिनस्यातीतचरदिनस्यायुर्भ्रंशेऽवसानकाले
सायंसमये दयाया उदयादिव सङ्कुचतां स्वानानां कमलानां
मुकुलानि कलिकाः तेषां क्रोडान्मध्यात् नीडेषु प्रवेशं उपे-
युषां प्राप्तानां मकरन्दास्वादलाम्पट्यात् सायं सन्ध्यासमयेऽपि
कमलेषु स्थितानामनन्तरञ्च तेषु सङ्कुचितेषु बहिर्निर्गन्तु-
मसक्तत्वात् संकुचत्कमलमर्मरूपेषु नीडेषु स्थितानामिति
यावत्। क्रोडमिति पाठे मुकुलविशिष्टकमलक्रोडमेव नीडप्र-
वेशं गतानां। अनन्तरञ्च रात्रावतीतायां इह प्रातःसन्ध्या-
समये भिन्नेषु ईषद्विकसितेषु अम्भोरुहेषु समायतां पूर्व्वदि-
नान्तसङ्कुचितेषु ईषदुच्छ्वसितेषु सत्सु सुखेन निर्गन्तुं प्रभुत्वा-

न्तेभ्यः सकाशादर्थाच्चवीनकमलानि उद्दिश्य समागच्छतां मधुलिहां मधुना सहचरैः पूर्व्वदिनान्ते कमलसङ्कोचात् पूर्व्वमेव कमलकोशान्निर्गतैः सहचरैः सहचरीभिश्च मित्रकलत्रादिभिः सह मधुना मकरन्देन कृता पारणा: उपोषितसमनन्तरमश्नीनि भोजनानि आलोक्यन्ते लोकैरिति शेषः। ये रात्रौ कमलबद्धास्ते तत्र मकरन्दाभावान्निर्बन्धवशाच्च कृतोपवासाः। अनिबद्धाःसहचरास्तु रात्रौ निद्रावशात् तद्वियोगाद्धि कृतोपवासाः अतः सर्व्वेऽपि प्रातर्मिलित्वा विकसितकमलमधुना पारणां कुर्वन्तीत्यर्थः। पूर्व्वदिनान्ते सङ्कुचितानि कमलानि प्रातः पुनः किञ्चिद्विकसितानीति प्रसिद्धिः। भृङ्गाणां तयो जातः तस्मादुद्भुधलेत्यर्थः। अन्येऽपि कस्मिंश्चिन्महीयसि कृते वन्ध्यादौ वा निबद्धे कृपया सङ्कुचितदशा भवन्ति। केचिच्च महत्युपरते सति उपवासङ्कुर्वाणा गृहमध्यं प्रविश्य दिनान्तरे ज्ञातिभिः सह भुञ्जते। ज्ञातिभिः सह भोजनमेतत्प्रेतेषु दुर्लभमिति शास्त्रार्थः सहचरपदेन सूचितः। निगडबद्धोऽपि कारागृहेषु भिन्नेषूमोचितः समागच्छन् सन् स्वस्य बन्धनवशान्निराहारैर्ज्ञातिभिः सह मधुरैरन्नैः पारणां करोति। कोशादीनि यथायथं चेतौ ल्यब्लोपे पञ्चमी। समायतां दृशः शता। सहचरैः पुमान् स्त्रियेत्येकशेषः (पा०१।२।६७) ॥ ३० ॥

तिमिरविरहात्पाण्डूयन्ते दिशः कृशतारकाः
कमलहसितैः श्येनीवोन्नीयते सरसी न का।
शरणमिलितध्वान्तध्वंसिप्रभादरधारणा-
द्गगनशिखरं नीलत्येकं निजैरयशोभरैः ॥ ३१ ॥

तिमिरेति ॥ प्राच्यादयो दिशास्तिमिरस्य विरहाद्दशाशात् पाण्डूयन्ते शुभ्रा इवाचरन्ति, अतएव कृशाः अप्रकाशाः किञ्चि-द्दृश्यास्तारकाः कतिपयनक्षत्राणि यासु एवं विधाः। अन्यापि प्रियवियोगात् पाण्डुरतिमग्नातिकृशनेत्रकनीनिका भवति। तथा का सरसी कमलानां हसितैर्विकाशैः कृत्वा श्येनीव नोन्नीयते न तर्क्यते, अपि तु सर्वा अपि सरस्यस्तैः शुभ्रायन्ते। अन्यापि प्रियप्राप्तेः कमलतुल्यमुखहसितैः श्वेता भवति। एकं गगन-शिखरं गगनमध्यभागः शरणार्थं स्वपरित्राणार्थं गगनं प्रति मिलितस्य प्रत्यागतस्य ध्वान्तस्य ध्वंसिनी विनाशिनी या सूर्यप्रभा तस्यास्तादरधारणाद्धेतोः निजैरयशोभरैः स्वीयैरकीर्त्तिसमूहैः नीलति श्याम इवाचरति, अन्योऽपि शरणागतं परित्यज्य तद्वैरिणामादरेणाङ्गीकुर्व्वन् दुर्यशसा श्यामो भवति। दिशः सरांसि च प्रसेदुः। गगनस्य नक्षत्राद्यातार्य्यशोभापगमात् निजं नीलिमानं प्राप्तमिति भावः। पाण्डूयन्ते उपमानादाचारेऽर्थे कर्त्तुः क्यङिति (पा॰३।१।१०।११) क्यङ्। अकृत् सार्व्वधा-तुकयोरिति (पा॰७।४।२५) दीर्घः। वर्णवाचिनः श्येतशब्दात् वर्णादनुदात्तादिति (पा॰४।१।३९) ङीप् तस्य नश्चनोत्वति नीलवर्णे इति धातुः। आचारक्विबन्तान्नीलशब्दान्निष्ठा ॥ ३१॥

सरसिजवनान्युद्यत्पद्मार्यमाणि हसन्तु न
च्युतरुचिसुहृच्चन्द्रं तन्द्रामुपैतु न कैरवं।
हिमगिरिदृषद्दायादश्रि प्रतीतमदः स्मितं
कुमुदविपिनस्याथो पाथोरुहैर्निजनिद्रया॥ ३२॥

सरसिजेति। सरसिजवनानि न हसन्तु अपि तु विकसन्त्वेव। यस्मादुद्यन्नुदित्वरः पद्मःसहायभूतः अर्यमा सूर्यो येषां विकस्वराणीत्यर्थः। अथ च यदीयमित्रस्योदयो भवति स सर्व्वोऽपि हर्षवशाद्विकसत्येव। तथा कैरवं कुमुदं तन्द्रां सङ्कोचं नोपैतु अपि तु प्राप्नोत्वेव। यतः च्युतरुचिः गतलक्ष्मीकः सुहृच्चन्द्रो यस्य तादृशं। चन्द्रोदये विकसतः कुमुदस्य चन्द्रक्षये सङ्कोचो युक्त एवेत्यर्थः। अन्योऽपि सुहृत्क्षये मूर्च्छावस्थामिमीयति। अथो अथवा पाथोरुहैर्विकसितकमलैः रात्रिसम्बन्धिन्या निजनिद्रया कृत्वा कुमुदवनस्यादः प्रत्यक्षदृश्यं स्मितं विकसितं प्रतीतं विनिमयेन गृहीतं हिमगिरेर्हिमाचलस्य दृषदां शिलानां दायादांशभागिनी सदृशी श्रीःशोभा यस्य शुभ्रतरमित्यर्थः। कमलानां रात्रौ निद्रा कुमुदानाञ्च विकासः प्रातस्तु कमलानां विकासः कुमुदानाञ्च सङ्कोचो दृश्यते ततः स्वीयां निद्रां कुमुदेभ्यो दत्वा कमलैस्तद्विकासः परिवृत्त्य गृहीत इति सम्भाव्यत इत्यर्थः। सूर्य्ये उदितः कमलानि विकसितानि कुमुदानि च सङ्कुचितानीति भावः। प्रतीतं प्रतिपूर्व्वादिणो निष्ठा। प्रतीष्टमिति च पाठः अर्थः पूर्व्वोक्त एव॥ ३२॥

धयतु नलिने माध्वीकं वा न वाऽभिनवागतः
कुमुदमकरन्दौघैः कुक्षिम्भरिर्भ्रमरोत्करः।
इह तु लिहते रात्रीतर्षं रथाङ्गविहङ्गमा-
मध निजवधूवक्त्राम्भोजेऽधुनाऽधरनामकं ॥ ३३ ॥

धयत्विति। अभिनवो नूतनः प्रभाते आगतः भ्रमरोत्करः नलिनैर्वर्त्तमानं माध्वीकं मकरन्दं धयतु पिबतु वा न वा। यतः रात्रौ कुमुदमकरन्दौघैः कुक्षिम्भरिः आकण्ठतृप्तः परिपूर्णोदरः रात्रौ कुमुदमकरन्दवृन्दैः पूरितोदरत्वात् प्रातर्मधु पिबतु वा मा पिबतु वा न तत्रास्माकमाग्रह इत्यर्थः। अन्योऽप्याकण्ठतृप्तोऽतिथिर्भुङ्क्ते न वा न तत्रादरः। रथाङ्गविहङ्गमास्तु रात्रीतर्षं सकलां रात्रिं तर्षित्वा वियुक्तत्वात् कुमुदमकरन्दं परित्यज्य पिपासयैव स्थित्वा इह प्रत्यक्षदृश्ये निजवधूवक्त्राम्भोजे वर्त्तमानमधरनामकमोष्ठसंज्ञं मधु अधुना प्रातःसमये लिहते आस्वादयन्ति, एतद्युक्तं। तावतैव चाम्भोजस्यापि कृतार्थत्वं जातमित्यर्थः। अन्यत्रापि तृष्णार्त्ते इच्छया उपोषितस्य भोजनं युक्ततरं भवति। भ्रमरा मकरन्दमास्वादयन्ति चक्रवाकास्तु प्रातर्वियोगापगमात् कमलमकरन्दमनादृत्य निजसहचरीश्चुम्बन्तीति भावः। फलेग्रहिरात्मम्भरिश्चेति (पा० ३।२।२६) चात्कुक्षिम्भरिः। रात्रीतर्षं अस्यतितृषोरिति (पा० ३।४।५७) णमुल्। तृतीया प्रभृतीति (पा० २।२।२१) समासः ॥ ३३ ॥

जगति मिथुने चक्रावेव स्मरागमपारगौ
नवमिव मिथः सम्भुञ्जाते वियुज्य वियुज्य यौ।
सततममृतादेवाहाराद्यदापदरोचकं
तदमृतभुजां भर्त्ता शम्भुर्विषं बुभुजे विभुः॥ ३४॥

जगतीति। जगति त्रैलोक्यमध्ये चक्रावेव मिथुने स्त्रीपुंसौ स्मरागमपारगौ कामशास्त्रपारगामिनौ तावेवास्य वेदिनौ नान्यौ। यद्वा स्मरागमपारगौ चक्रवाकावेव जगति मिथुने नान्ये एतादृशे चतुरे मिथुने स्त इत्यर्थः। कुत एतज्ज्ञातमित्यत आह। यौ चक्रवाकस्त्रीपुंसौ वियुज्य वियुज्य पुनरन्योन्येन सह रात्रौ वियोगं प्राप्य मिथोऽन्योन्यं नवमिव अतिपरिचयजन्याव-ज्ञाशून्यं सातिस्पृहमिव सम्भुञ्जाते सुरतसुखमनुभवतः। अजस्र-कामसेवनाद्विरागो भवेदिति वियुज्य सम्भोगः प्रत्ययसम्भोगव-द्रसातिशयचमत्कारकारी भवतीति कामशास्त्ररहस्यं ज्ञात्वैव तावेवं कुरुत इत्यर्थः। अत्र दृष्टान्तः। यद्यस्मात् अमृतभुजां केवलपीयूषाहाराणां सुराणां भर्त्ता स्वामी सुखभतरामृत इति यावत्। विभुर्व्यापकः समर्थो विषभक्षणेऽप्यसम्भावितोपद्रव इति यावत्। स शम्भुः नीरोगकरणद्वारा सर्व्वेषामारोग्यसुख-कारी असम्भावितरोगोऽपीश्वरः सततममृतभक्षणादेवाहाराद्भ-क्ष्यादरोचकं अमृताशनानभिलाषरूपं रोगमापत् प्राप। तत् तस्मात्परिहारार्थं विषं बुभुजे। सततमधुरतरास्वादजन्यारुचि-परिहारार्थमेव स कालकूटं भक्षितवान्, अनन्तरञ्च पुनर-

विशति युवतित्यागे राचीमुचं मिहिकारुचं
दिनमणिमणिं तापे चिन्ताग्निजाश्च यियासति।
विरहतरलज्जिह्वा बह्वाह्वयन्त्यतिविह्वला-
मिव सहचरीं नामग्राहं रथाङ्गविहङ्गमाः ॥ ३५ ॥

मृतभवने प्रत्ययेव दुःखिनस्य यथा जायते तथा वियोग एव सम्भोगे नितरां दुःखमुत्पादयतीति बुद्ध्या चक्रवाकाभ्यां क्रियत इति तावेव कामशास्त्ररहस्यज्ञाविति भावः। पारणे ग्लात्य-र्थेति (पा० ३।२।४८) डः। समुज्ञाते भुजोनवन इति (पा० १।३।६६) तङ्। अनेन सम्भोगस्य वियोगादेव नूतनत्वं भवतीति सूच्यते ॥ ३४ ॥

विशतीति। युवतित्यागे चक्रवाकनिष्ठस्त्रीवियोगे मिहिकारुचं शीतांशुं विशति सति राचीमुचं रात्रिसम्बन्धप्रियात्या-गिनं तथा वियोगजन्ये तापे परितापे ग्रीष्मे च निजाच्चिन्ताच-क्रवाकहृदयात् सकाशात् दिनमणिमणिं सूर्य्यकान्तं यियासति जिगमिषति सति विरहेण तरलन्ती तरलेवाचरन्ती विह्वली-भवन्ती स्खलन्ती जिह्वा येषां ते रथाङ्गविहङ्गमा विरहेणा-तिविह्वलां सहचरीं चक्रवाकीं नामग्राहं स्वसङ्केतेन नाम गृहीत्वा इव प्रभाते क्रीडासरसि वा बहुवारं आह्वयन्ति आ-कारयन्ति। अन्योऽप्यतिविह्वलो बहु वारं आकार्य्यते ऋयिति न वेति सन्देहात्। प्रतिचक्रवाकानां संयोगः परितापत्यागः परस्पराह्वानं चन्द्रधूसरत्वं सूर्य्यकान्तसन्तापश्च। प्रायेयं मिहि-

स्वमुकुलमयैर्नेत्रैरन्धस्मविप्लुतया जनः
किमु कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकाम्।

केत्यमरः। राचीमुखं क्विप्। इगिति षस्मदादित्वात्। मिहिका इग्यस्येति समासः। तरलजिह्वा तरलेवाचरतीति आचार क्विबन्ताच्छतरि पुम्वत्। आकर्षन्ति स्वङ्गाभावात्तङभावः ॥ २५ ॥

स्वेति। जनो लोकः स्वमुकुलमयैः आत्मीयकलिकानेत्ररूपैः हत्वा अन्धस्मविप्लुतया अनन्धाया अप्यन्धत्वाङ्गीकाराद्धेतोः रवेः अनवेक्षिकां अनवलोकिकां कुमुदिनीं किमु किमर्थं दुर्व्याचष्टे दुष्टां कथयति। अवश्यदर्शनीयपवित्रसूर्य्यादर्शननियमादियं मिथोदयं न सहत इति लोकः किमिति निन्दति, अपि त्वयुक्तेयं निन्देत्याक्षेपः। उ अहो किं निन्दतीति वा। अन्धस्मविप्लुतयाऽविचारतया रहस्यमजानन्नेव किमिति निन्दतीति जनविशेषणं वा। कथमयुक्तमित्यत आह। हे श्रोतारः यूयं शृणुत शृणुत तस्याः सूर्य्यादर्शने हेतुमाकर्णयत। ये राज्ञो नृपस्य दाराः कवीनां पाणिन्यादीनां प्रतिभासमुत्पन्नेषु व्याकरणादिग्रन्थेषु विषये लिखितास्तच्छिष्यैः पठितास्तातः अवश्यदर्शनीयं सूर्य्यमपि न पश्यन्तीत्यसूर्य्यम्पश्या राजदारा इत्येव लिखितास्तच्छिष्यैश्च तथैव पठिताः। ननु प्रकृते किमित्यायातमाह सा कुमुदिनी किस प्रसिद्धं न भाविनी भविष्यति अर्थाद्राज्ञो दाराः, अपि तु राज्ञश्चन्द्रस्य अथच नृपस्य दारा भवन्त्येव।

लिखितपठिता राज्ञो दाराः कविप्रतिभासु ये
शृणुत शृणुतावर्य्यम्पश्या न सा किल भाविनी ॥३६॥
चुलुकिततमःसिन्धोर्भृङ्गैः करादिव शुभ्यते
नभसि विसिनीबन्धोरन्धश्च्युतैरुदविन्दुभिः।

राजमहिष्यो हि अतिसुरक्षितत्वादसूर्य्यम्पश्याः, इयमपि तथा, तस्मादेतस्या अपि असूर्य्यम्पश्यता युक्तेति रहस्यानभिज्ञो जनो वृथैवैतां निन्दतीत्यर्थः। किलशब्दः किमर्थो वा। अत्र य इति कुमुदिनीपरामर्शेऽपि दारैः सामानाधिकरण्याद्बहुवचनं। येति पाठः समीचीनः। लिखितपठिता एकवचनं बहुवचनं वा। सूर्य्योदयवशात् कुमुदिनी सङ्कुचितेति भावः। अन्धम्भविष्णुतया कर्त्तरि भुवः खिष्णुजिति (पा॰ ३।२।५७) अन्धशब्द उपपदे भुवः खिष्णुचः खित्वात् अरुर्द्विषदिति (पा॰ ६।३।६७) मुम्। अवेचिका एवेति प्रत्ययस्थादिति (पा॰ ७।३।४४) कात्पूर्व्वस्येत्वं। लिखितपठिताः कर्म्मधारयो द्वन्द्वो वा। असूर्य्यम्पश्याः असूर्य्यललाटयोरिति (पा॰ ३।२।३६) खश् खित्वान्मुम्। अत एव ज्ञापकात् क्रियायोगिनोऽपि नञः समासः॥ ३६ ॥

चुलुकितेति। गगने गच्छद्भिर्भृङ्गैः उदविन्दुभिरिव नभसि शुभ्यते दीप्यते। किम्भूतैरुदविन्दुभिः चुलुकः कृतश्चुलुके धृत्वा पीतः तमःसिन्धुस्तिमिरसमुद्रो येन तस्य विसिनीबन्धोः पद्मिनीमित्रस्य सूर्य्यस्य करात् किरणादेव हस्तात् रन्ध्रेभ्योऽङ्गुल्यन्तरालविवरेभ्यश्च्युतैर्गलितैः, चुलुकेन पीततमःसिन्धोरुपरिव-

शतदलमधुस्रोतःकच्छद्वयीपरिरम्भणा-
दनुपदमदःपङ्काशङ्काममी मम तन्वते ॥ ३७ ॥
घुसृणसुमनःश्रेणिश्रीणामनादरिभिः सरः-
परिसरचरैर्भासां भर्त्तुः कुमारतरैः करैः।

र्त्तमानस्य रवेः कराङ्गुलीविवरेभ्योऽधोगलिताः हृतत्नजलवि-
न्दव इव भृङ्गा गगने शोभन्त इत्यर्थः। चुलुकितेति करविक्षे-
पणं वा। अनुपदं गगनात् सकाशात् कमलानि प्रति पातानन्तरं
शतदलाख्यान्यतिस्थूलानि कमलानि तेषां मधुस्रोतसः मक-
रन्दप्रवाहस्य कच्छद्वयी मकरन्दार्द्रभागद्वयं यत्तटद्वयं तस्याः
परिरम्भणात् संश्लेषादुभयतस्तत्र लगनाद्धेतोरमी भृङ्गा अदःप-
ङ्काशङ्कां अमुष्य पीतस्य तमःसिन्धोरधःस्थितावशिष्टकर्दमसम्भा-
वनां वैतालिकस्य मम तन्वते विस्तारयन्ति। सकलेऽपि तमोजले
पीतेऽवशिष्टतया पङ्क इव भृङ्गाः शोभन्त इत्यर्थः। अमुष्या
मकरन्दप्रवाहकच्छद्वय्याः पङ्क इति वा। प्रवाहतटद्वये पङ्को
युक्तः। भृङ्गाश्च मकरन्दस्योपरि नोपविशन्ति किन्तु अभित इति
तेषां जातिः। प्रातःकालो जातोऽन्धकारः साकल्येन विनष्टः
भ्रमरास्तन्नीडेभ्यो निर्गत्य गगन उड्डीय मधुपानार्थं कमला-
न्युद्दिश्य यान्तीति भावः। चुलुकित इति तत्करोतीति (पा॰ ३।
१।२६।वा॰१) ण्यन्तात्क्तः शुभ्यते शुभङ् दीप्तौ भावे यक् ॥ ३७ ॥
घुसृणेति। घुसृणसुमनसः कुङ्कुमकुसुमानि तासां श्रेणि-
स्तस्याः श्रीणां कान्तीनां अनादरिभिः अनादरशीलैः ताभ्योऽपि

अजनि जलजामोदानन्दोत्पतिष्णुमधुव्रता-
वलिप्रवलनाद्गुञ्जापुञ्जश्रियं ग्रहयालुभिः ॥ ३८ ॥
रचयति रुचिः शोणीमेतां कुमारितमा रवे-
र्यदलिपटली नीलीकर्त्तुं व्यवस्यति पातुका।
अजनि सरसी कल्माषी तद्ध्रुवं धवलस्फुट-
त्कमलकलिकाखण्डैः पाण्डूकृतोदरमण्डला ॥ ३९ ॥

रक्ततरैः खरःपरिसरचरैस्तीरवत्तरवर्तिभिः कुमारतरैरतिबा-
लैर्भासां भर्त्तुः करैः सूर्य्यकिरणैः जलजामोदः गगनावगाहिक-
मलपङ्कजपरिमलस्तद्विषय आनन्दस्तेनोत्पतिष्णुरुत्पतनशीला
मधुव्रतावलिस्तया प्रवलनात् मिश्रणाद्धेतोः गुञ्जापुञ्जश्रियं अ-
ङ्कुरक्तैकपक्षगुञ्जाराजिशोभां ग्रहयालुभिर्ग्रहणशीलैः अजनि
तत्सदृशैर्जातमित्यर्थः। बाला अपि सुमनसां धीराणामप्यना-
दरिणो भवन्ति। बाला अपि रक्तकराभवन्तीति केचित्।
अजनि भावे चिण्। उत्पतिष्णुः अलङ्कृञि (पा० ३।२।१३६)
तीष्णुच्। प्रवलनं तत्करोतीति (पा० ३।१।२६।वा० १) ण्यन्ता-
न्नपुंसके भावे ल्युट्॥ ३८ ॥

रचयतीति। यद्यस्मात् रवेः कुमारितमा अतिबाला रुचिः
सरसीं शोणीं रक्तवर्णां रचयति। यस्माच्च कमले मकरन्दा-
स्वादार्थं पातुका अलिपटली भृङ्गश्रेणी स्वसम्बन्धारेतां नीली-
कर्त्तुं व्यवस्यति। यतस्तेयं धवलानां स्फुटन्तीनां कमलकलि-
कानां खण्डैः समूहैः पाण्डूकृतं उदरमण्डलमध्यदेशो यस्याः

कमलकुशलाधाने भानोरहो पुरुषव्रतं
यदुपकुरुते नेत्राणि श्रीगृहत्वविवक्षुभिः।
कविभिरुपमादानादम्भोजतां गमितान्यसा-
वपि यदतथाभावान्मुञ्चत्युलूकविलोचने ॥ ४० ॥

नैतादृशी तस्मात् ध्रुवं निश्चितं इयं सरसी कल्माषी कर्बुरेवा-
जनि जाता। रक्तकृष्णश्वेतवर्णमिश्रणात् कर्बुरत्वोत्प्रेक्षा। ध्रुवमु-
त्प्रेक्षायां वा। बालातपो जातः भ्रमराः परितो भ्रमन्ति कम-
लानि विकसितानीति भावः। चित्रं किर्मीरकल्माषेत्यमरः।
गौर्वो गोवाल्माषाभिति (पा॰ ४।१।४२) ङीप्। कुमारितमा
घरूपेति (पा॰ ६।३।४३) ह्रस्वः।पटलकल्माषौ गौरादौ ॥३९॥

कमलेति। कमलमात्रस्य कुशलाधाने मङ्गलाचरणे
भानोः अहो महदाश्चर्यरूपं पुरुषसम्बन्धि व्रतं नियमः, अङ्गी-
कृतपरिपालनशीलत्वमिति यावत्, यं दृष्ट्वाऽहो आश्चर्यरूपः
पुरुष इति सर्वे वदन्ति। कुतो ज्ञातमत आह। यद्यस्मात्ता-
न्विकाशि कमलानि विकासयतीति किं वाच्यं किन्तु श्रियोः
कान्तिलक्ष्म्योः गृहत्वं स्थानतां विवक्षुभिः वक्तुमिच्छुभिः व्यास-
वाल्मीकिकालिदासादिभिः कविभिः उपमादानात् किञ्चिच्छ्री-
गृहत्वादिगुणसादृश्यादपि अम्भोजतां कमलत्वं गमितानि प्रा-
पितान्यारोपितकमलत्वान्यपि नेत्रकमलानीति निर्दिष्टानि
लोकनेत्राण्यसौ रविः उपकुरुते उन्मीलयति। उदिते हि
सर्वे लोकनेत्राण्युन्मीलयन्ति। अथच घटार्थं पुरुषसमर्थानि

यदतिमहती भक्तिर्भानौ तदेनमुदित्वर-
स्त्वरितमुपतिष्ठस्वाध्वन्य त्वमध्वरपद्धतेः।

करोति। यत आलोकसहकृतमेव चक्षुः पदार्थग्रहणसमर्थं। यद्यपि अन्यथाभावात् श्रीगृहत्वाभावात् कविभिः कमलत्वेनानुरञ्जनादुलूकविलोचने मुद्यति मीलयति। न च पदार्थांनापादयति। यत उलूकस्य दृष्टिरन्धकारस्थैरिति लोकप्रसिद्धिरस्त्येवयोः श्रीगृहत्वं दूरनिरस्तं। सूर्य्येण कमलानि कमलतुल्यानि च लोकनेत्राणि विकाश्य उलूकनेत्राणि कमलगुणयोगाभावादविकाश्यान्वयव्यतिरेकाभ्यां स्वप्रतिज्ञा सत्या कृता। एवंविधः सत्यप्रतिज्ञः कोऽपि नास्तीत्यर्थः। कमलानि विकसितानि सर्व्वोऽपि लोकः प्रबुद्धः कौशिकनेत्रे च निमीलिते प्रातःकालो जात इति भावः। श्रीगृहत्वविवक्षुभिः द्वितीयेति योगविभागात् समासः। उपमितिरुपमानं नपुंसके भावे ल्युट्। उपमीयतेऽनेनेति उपमानं सादृश्यमिति भावः॥ ४०॥

यदिति। यद्यपि त्वं भानौ अतिमहती भक्तिर्यस्यैवम्भूतो वर्त्तसे तर्हि हे अध्वरपद्धतेर्यज्ञमार्गस्याध्वन्य महायाज्ञिक त्वम् उदित्वरमुदयशीलमेनं सूर्य्यं त्वरितमुपतिष्ठस्व पूजय। शीघ्रमुपस्थाने हेतुमाह। हि यस्मात् इह समये प्रभाते किल प्रसिद्धं रविमभिलक्षीकृत्य उपस्थानमन्त्रेणोर्द्धं क्षिप्ता जलाञ्जलयो मन्देहाख्येषु राक्षसेषु उदवज्रतां जलरूपाशनिभावं व्रजन्ति वज्रीभूय तान् भस्मीकुर्व्वन्तीति श्रुतावुक्तमित्यर्थः। तिस्रः कोटो-

इह हि समये मन्देहेषु व्रजन्त्युदवश्यता-
मभिरविमुपस्थानोत्क्षिप्ता जलाञ्जलयः किल ॥ ४१ ॥
उदयशिखरिप्रस्थावस्थायिनी खनिरनया
स्निग्धतरमहोमाणिक्यानामहर्मणिमण्डली।

ऊर्ध्वकोटी च मन्देहा नाम राक्षसाः इति पुराणम्। तस्मादु-दयात् पूर्वं शीघ्रमुत्तिष्ठस्वेत्यर्थः। अध्वन्यमिति पाठे अध्वरपङ्क्-तेरध्वागमनं गमितं। भक्तिशब्दस्य प्रियादित्वात् पुंवद्भावा-भावः। अध्वन्य असङ्गाम्यर्थे अध्वनो यत् खाविति (पा० ५।२।१६) यत्। उदवश्यतां मन्थौदनेत्यादिना (पा० ६।३।६०) उद-कस्योदादेशः। अभिरभागे (पा० १।४।९१) इत्यभेः कर्मप्रव-चनीयत्वाद्द्वितीया ॥ ४१ ॥

उदयेति। इयं अहर्मणेः सूर्यस्य मण्डली उदयशिखरिणः उदयाचलस्य प्रस्थे सानुनि अवस्थायिनी वर्त्तमानाऽनया भूयसी स्निग्धतराणि रक्ततराणि महांसि तेजांसि तान्येव माणिक्यानि येषां खनिरुत्पत्तिभूमिः ध्वान्तेन तिमिरेण ध्वान्तवच्च यस्याः पिधायिकां आकरद्वारा आच्छादिकां रजनिरूपां दृषद् शिलां विधूयापनीय कतमेन केन जनेन विमुद्रिता उद्घाटितेति न खलु नैव जाने रात्रिविगमे यतो दृश्यत इत्यर्थः। वाक्यार्थः कर्म। न जाने अर्थान्तं जनमित्यर्थ इति वा। अन्यापि माणि-क्याद्याकरखनिः पर्वतप्रस्थावस्थायिनी कृष्णतरशिलापिहिताऽपि केनापि भाग्यवतोद्घाट्यते। अतिशयितः कः कतमो मध्याऽनेक

रजनिहृदयं ध्वान्तश्यामां विधूय पिधायिकां
न खलु कतमेनेयं जाने जनेन विमुद्रिता ॥ ४२ ॥
सुरपरिवृढः कर्णात् प्रत्यग्रहीत् किल कुण्डल-
द्वयमथ खलु प्राच्यै प्रादान्मुदा स हि तत्पतिः।
विधुरुदयभागेकं तत्र व्यलोकि विलोक्यते
नवतरकरस्वर्णस्रावि द्वितीयमहर्मणिः ॥ ४३ ॥

विमुद्रितेत्यहं न जाने, अपि त्वेवमेव जानामि। कालपरिव-र्त्तकारिणा ब्रह्मणैवोद्घाटितेत्यर्थ इति काकुर्वा। खनिः खलु खनिरिवेत्युत्प्रेक्षा वा। कतमः उतमः। अतिशये स्वार्थे वा तम एव ॥ ४२ ॥

सुरेति। सुरपरिवृढः शक्रः कर्णात् कुण्डलद्वयं कर्णभूषणयुगं ब्राह्मणवेषं धृत्वा प्रतिग्रहरूपेणाग्रहीत्। किलेति पुराणादौ प्रसिद्धं। अथ प्रतिग्रहानन्तरं मुदा तत्कुण्डलद्वयं खलु निश्चितं प्राच्यै दिशे प्रादात्। हि यस्मात् स शक्रस्तस्याः प्राच्याः पतिः धवः रक्षिता च प्रियान् प्रियायै प्राच्या प्रीत्या निजकर्णादिभूषणं प्रयच्छति। तस्यै दत्तमिति कुतो ज्ञातमत आह। तत्र प्राच्यां तयोर्द्वयोर्मध्ये वा विधुः सायं उदयभाक् उदित्वर आरक्त-किरणरूपमेकं कुण्डलं व्यलोकि दृष्टं। प्रातः, अहर्मणिः, नव-तरास्तत्कालनिर्गताः करा रक्ततरकिरणाः तद्रूपस्वर्णस्रावि सुवर्णस्रवणशीलं तादृशमेव द्वितीयं कुण्डलं विलोक्यते। तस्मात् तस्यै तद्द्वयं तेन प्रदत्तमित्यहं शङ्के इत्यर्थः। सूर्य्यस्य कुण्डलस-

इदनमविशद्दीप्तिर्याऽस्तङ्गते गतवासर-
प्रशमसमयप्राप्ते पत्यौ विवस्वति रागिणी।
अधरभुवनात् सोद्धृत्यैषा हठात्तरणेः क्रता-
मरपतिपुरप्राप्तिर्धत्ते सतीव्रतमूर्त्तिताम्॥ ४४॥

मर्थनार्थं प्रसन्नाच्चन्द्रस्य कुण्डलमुक्तं। बालतरकिरणः सूर्य्यः उत्तमसुवर्णसाविकर्णकुण्डलमिव शोभत इति भावः। कर्णेनेन्द्राय कुण्डलद्वयं दत्तमित्यारण्यके पर्व्वणि कथा॥ ४३॥

इदनमिति। या दीप्तिः रागिणी रक्ता सती विवस्वति सूर्य्यरूपे पत्यौ गतवासरप्रशमे पूर्व्वदिनावसाने सायङ्काल-समयप्रस्मयकालं प्राप्तेऽतएवास्तं विनाशं अस्ताचलं वा प्राप्ते सति, अग्निर्ज्योतिरित्याद्यग्निहोत्रमन्त्रादिप्रामाण्यात् इदन-मविशत्। सैषा दीप्तिः अधरभुवनात् पातालात् सकाशात् हठात् बलात्कारेणार्थात्तरणिमेवोद्धृत्योदयं प्रापय्य तरणेरग्रे क्रताम-रपतिपुरस्य स्वर्गस्य प्राप्त्या वा प्राप्तिर्यया एवम्भूता सती तीव्रतया तीक्ष्णतया सह वर्त्तमाना मूर्त्तिर्यस्यास्तत्तां धत्ते। क्रमेण सूर्य्ये ऊर्द्ध्वदेशे प्राप्ते दीप्तिः खरतरा जातेति भावः। या नारी भर्त्तरि विनाशसमयप्राप्ते विनष्टे सति तस्मिन्ननु-रागिणी सती जन्मान्तरेऽपि तत्प्राप्त्यर्थमग्निप्रवेशं कुरुते, सा दुष्कृतैः पातालप्राप्तमपि निरयपतितं, व्यालग्राही यथा व्याल-मित्यादिवचनप्रामाण्यान्निरयाद्बलादुद्धृत्य तस्य क्रतस्वर्गप्राप्तिः सतीनां पतिव्रतानां व्रतमेव मूर्त्तिः शरीरं यस्याः, सती गौरी

बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः
पितृशितिहरित्पर्णाद्याहारजः किल कालिमा।
शमनयमुनाक्रोडैः कालैरितस्तमसां पिबा-
दपि यदमलच्छायात् कायादभूयत भास्वतः ॥ ४५ ॥

तस्या वा मतयुक्ता मूर्त्तिर्यस्यास्तत्तां धत्ते। गौरीवदियमपी-
त्यर्थः। समयप्राप्ते प्राप्तापन्ने इति (पा० २।२।४) समासः ॥ ४४ ॥

बुधेति। तनुजन्मनोऽपत्यस्य तनौ वर्त्तमानः कालिमा
श्यामत्वं किल प्रसिद्धं निश्चितं वा, पितुः शिरोर्वा शितिहरिद्-
वर्णादीनां कृष्णनीलवर्णपत्रफलशाकादीनां च आहारो तज्जन्म
शितिहरिद्वर्णं यदाद्यमदनीयं पत्रशाकादि वा तस्माज्जातः
सश्यामो मैत्रातनयत्वादित्यादि बुधानामुदयनाचार्यादीनां
इयं कथा गोष्ठी तथ्यैव सत्यैव। यद्यस्माद्धेतोः भास्वतः इतः
प्रत्यक्षदृश्यादमलच्छायादुज्ज्वलकान्तेः शुक्लभास्वरादपि तमसां
पिबात् तमिस्रैकहारात् कायात् शमनयमुनाक्रोडैः यमयमु-
नाशनैश्चरैः कालैः श्यामैरभूयतोत्पन्नं। सूर्य्यकायस्योज्ज्वलत्वेऽपि
श्यामतमिस्राहारपरिणतिवशात् यमादिभिरपत्यैः श्यामैर्जातं
तस्मादियं पण्डितकथा सत्यैवेत्यर्थः। सर्व्वमपि तमः सूर्य्येण नाशि-
तमिति भावः। आद्यं अदेः ऋहलोर्ण्यदिति (पा० ३।१।१२४)
ण्यत्। कालीव कालो वेति पुमान् स्त्रियेत्येकशेषः (पा० १।२।
६७)। तमसां कर्म्मणि षष्ठी। अभूततद्भावे तङ्। क्रोडः कालो-
सितः पङ्गुर्मन्दः छायासुतः शनिरित्यमरशेषः ॥ ४५ ॥

अभजत चिराभ्यासं देवः प्रतिक्षणदात्ययं
दिनमयवपुः कालं भूयः प्रकल्प्य तथा रविः।
न खलु शकिता शीलं कालप्रसूतिरसौ पुरा
यमयमुनयोर्जन्माधानेऽप्यनेन यथोज्झितुं ॥ ४६ ॥

अभजतेति। अयं रविर्देवः क्षणदा रात्रिस्तस्या अत्ययं प्रत्यूषं प्रतिरात्र्यवसाने इत्यर्थः। दिनमयं दिनरूपं कालं युगादिकल्पसमयं अथच तद्रूपं स्वामं वपुः भूयो बहुतरं यथा तथा पौनःपुन्येन वा प्रकल्प्य उत्पाद्य चिरकालमभ्यासं तथा तेन प्रकारेण अभजत अशिश्रयत्। यथा येन प्रकारेण पुरा पूर्व्वं काल प्रसूतिर्यस्याय च काली स्वामा प्रसूतिर्यस्यैवम्भूतोऽसौ सूर्य्यः यमयमुनयोरपि प्रसविष्यतोर्जन्माधाने जन्मार्थं वीजक्षेपसमयेऽपि, अनेन चिराभ्यासेन हेतुना शीलं कालोत्पादनस्य स्वभावमुज्झितुं खलु निश्चितं न शकिता समर्थो भविता। कालप्रसूतिस्वभावः सूर्यः स्वभावस्य दुरतिक्रमत्वात् तावपि कालावुदपादयदित्यर्थः। उदयमानेन सूर्य्येण दिवसः कृत इति भावः। प्रातःकाले क्रियमाणोऽभ्यासः पटुतरो भवति। चिराभ्यासं मयूरव्यंसकादित्वात् समासः। यद्वाऽकारान्तस्य चिरशब्दस्य अत्यन्तसंयोगे चेति (पा॰२।१।२९) समासः। प्रतिक्षणदात्यये वीप्सायामव्ययीभावे नाव्ययीभावादिति (पा॰२।४।८३) सुपोऽलुक्। तृतीया सप्तम्योर्बहुलमिति (पा॰२।४।८४) त्वम् अत्यर्थामति निपातः कालप्रसूतिः पक्षे पुंवत्॥ ४६ ॥

रुचिरचरणः श्वेतोरुश्रीसनाथरथः शनिं
शमनमपि स त्रातुं लोकानसूत सुताविति।
रथपदकृपासिन्धुर्बन्धुर्दृशामपि दुर्जनै-
र्यदुपहसितो भास्वानास्मान् हसिष्यति कः खलः॥४७॥

रुचिरेति। सुजनैरेवम्भूतो यो भास्वानिति संस्तुतः दुर्जनैर्य-
स्मादेवं उपहसित स्तस्मादतितुच्छान्परवर्णनोपजीविनः को-
नाम खलोनोपहसिष्यति, अपि तु सर्वानुपहसिष्यत्येव। यथा
उदिते सूर्ये सद्भिः सूर्यस्यार्हणा क्रियते तथा खलैर्न, एवं तुच्छा
एते स्वोदरभरणार्थं यत्किञ्चिद्वदन्तीत्यस्माकं खलैर्निन्दायां
कृतायां भवादृशै राजशिरोमणिभिरस्माकमर्हणा क्रियत एवेति
खलानां प्रयासो वृथा एवेत्यर्थः। एवं कथं स्तुतः कथमुपहसित-
इत्यत आह। सूर्यः रुचिराश्चरणाः लचितलचणया किरणा यस्य
तथा सूतस्यारुणस्य उर्व्या महत्या श्रिया सुता सूर्येणैव प्रसूता
उर्वी श्रीस्तया सनाथोऽलङ्कृतो रथो यस्य सः। तथा शनिं शमनं
शनैश्चरदण्डधरौ सुतौ लोकान् त्रातुं असूत। शनिर्हि स्तुत्यादि
सिद्धिमात्रहेतुलोकपालतया लोकान् रक्षति। यमोऽपि दुष्टा-
दुष्टयोर्निग्रहानुग्रहौ कुर्वन् धर्माधर्माचरणप्रवृत्तिजननद्वारा
रक्षति। एतादृशौ परोपकारपरौ पुत्रौ असूत। तथा रथपदा-
नामनाथानां चक्रवाकानां कृपासिन्धुर्दयासमुद्रः रथस्य पदेन
व्यवसायेन गत्या जगतो दयासमुद्रो वा। तथा सकलपदार्थग्रहण-
सहकार्यालोकसम्पादनद्वारा दृशां सर्वजननेत्राणां बन्धुः मित्रं

शिशिरजरुजां धर्मं शर्मोदयाय तनूभृता-
मथ खरकराश्यानास्यानां प्रयच्छति यः पयः।

एवम्भूतः सुन्दरः परोपकारकरणैकस्वभावोऽपि इति स्तुतिपक्षः। इचिस्तेजोरूपस्तापकर इति यावत्। तथा अचरणश्चरण-रहितः यद्वा विपरीतलक्षणया रुचिरौ चरणौ यस्य। पुरा-णादौ चरणाङ्गुल्यादिध्याने कुष्ठादिदुष्टफलश्रवणात् ध्यानेऽप्य-चरणएव सूर्यः। विश्वकर्मणा कुन्दे आरोपितस्य सूर्यस्य तेजसां दुःसहत्वाच्चरणाकारो न निर्मित इति वा। अन्धं प्रति सुनेच-वचनवदचरणस्यापि रुचिरचरणत्वोक्त्योपहासः। तथा सूतस्य अनूरोः सारथेरुरुशोभया सनाथो रथो यस्य स इत्यपि विरुद्ध-लक्षणा। तथा अनेः क्रुरत्वाच्चिरकालभोग्यदुःसहत्वायम-स्यापि जगत्प्राणहरणशीलत्वात् परपीडाकरणैकस्वभावौ अ-निश्रमनौ पुत्रौ लोकान् चातुमस्ततेत्यपि विरुद्धलक्षणा। तथा तिर्यग्योनिपक्षिविशेषचक्रवाकाणामेव दयासिन्धुर्नान्येषां ताप-करत्वात् तादृशानामेव वन्धुर्नान्येषां। यद्वा तेजोभरेण दृष्टि-प्रतिघातकारित्वादवन्धुरपि दृशां वन्धुरित्यपि विरुद्धलक्षणेति उपहासपक्षः। एवम्भूतः सूर्यः समुदेतीति भावः॥ ४७॥

शिशिरेति। स भानुरुदयति उदेति। स कः, यः शिशिरर्त्तौ शिशिरं हिमं तस्माज्जाता रुक् पीडा येषां तेषां तनुभृतां जनानां शर्मणः सुखस्योदयाय प्राप्तये वसन्तनिदाघसम्बन्धिनं घर्ममुष्णं क्रमेण प्रयच्छति। अथानन्तरं वसन्तनिदाघसम्बन्धिनः खरास्तीक्ष्णतरा कराः सूर्यकिरणास्तैः आश्यानं शुष्कं स्यानं आस्यं

जलभयजुषां तापं तापस्पृशां हिममित्यय-
मरचितमितज्जत्याप्रवृत्तिः स भानुरुदच्छति॥ ४८ ॥
इह न कतरस्यिां धत्ते तमिस्रततीर्दिशा-
मपि चतसृणामुत्सङ्गेषु श्रिता धयतां चणात्।

सुखं येषां तेषां देहिनां सुखाय पयः वर्षाजलमम्बुदकं प्रयच्छति इत्ते। ततो जलभयजुषां जलभीनानां तापं दत्ते। ततस्तापस्पृशां शारदतापवतां देहिनां हेमन्ते हिमं दत्ते एवम्प्रकारेण परेभ्यो यद्धितं तस्मिन् विषये मितानां पौनःपुन्येन घटमानानां कृतेः शीततापजलदानरूपपुरुषव्यापारस्याप्रवृत्तिरावर्त्तना यस्य। यद्वा कृत्यानां शीतादिदानरूपाणां कार्याणां प्रवृत्तिर्यस्यैवम्भूतः परोपकारपरः सूर्य उदेतीत्यर्थः। स्पृशेति स्पृशमृर्त्तिस्पर्शनाचि-त्वाभावात् सम्प्रसारणाभावः। निष्ठान्तं। परचितेति चतुर्थी-तदर्थार्थेति (पा॰२।१।३६) समासः। कृत्या कृञः शचेति (पा॰ ३।३।१००) योगविभागात् क्तिनि कृतिः। चकारात् क्यपि तुकि च कृत्या। पचे अर्थार्थे विभाषाकृञेोरिति (पा॰३।१। १२०) क्यपि तुक्॥ ४८॥

इहेति। पूर्व्वादीनां चतसृणामपि दिशां उत्सङ्गेषु मध्य-देशेषु श्रिता वर्त्तमानास्तमिस्रततीस्तिमिरपरम्पराः चणाद्रु-घतां विनाशयतामपि अर्यम्णः सूर्यस्य रोचिषां तेजसां, इह किः शरणं यस्य तद्भावं दृढतस्यवाचित्वादेत्य प्राप्य निवसद्वर्त्तमानं छायारूपं तमः शमयितुं विनाशयितुं चासैश्चर्य्यसामर्थ्य-

तनुशरणतामेत्य च्छायामयं निवसत्तमः
शमयितुमभूदानैश्वर्यं यदर्यमरोचिषां ॥ ४९ ॥
जगति तिमिरं मूर्च्छामजस्रजेऽपि चिकित्सतः
पितुरिव निजादस्मादस्रावधीत्य भिषज्यतः।

मभूदिति यत् इत्याश्चर्यविषये कतमः को नाम जनश्चित्रं विस्मयं न धत्ते, अपि तु सर्व्वोऽप्याश्चर्य्यं प्राप्नोत्येव। दिगन्तगताया अपि तिमिरपरम्परायाः संहारे येषां शक्तिः तेषां रवितेजसां तरुतलमाश्रित्य स्थितं छायारूपं समीपवर्त्त्यपि तमः शमयितुं शक्तिर्नाभूदित्याश्चर्य्यमित्यर्थः। तनु इति पाठे तनु अल्पं शरीरं वा शरणं यस्य तद्भावं प्राप्य निवसदित्यर्थः। मरुदाश्रयेण स्थितमपि यो विनाशयितुं शक्नोति सोऽल्पाश्रयेण वर्त्तमानं शमयितुमपि न शक्नोतीत्याश्चर्य्यमेव। तरुच्छायामयं देहच्छायामयं वा तमो विहाय सर्व्वमपि तमः सूर्य्येण विनाशितमिति भावः। अनैश्वर्य्यं अनीश्वरस्य भाव इत्यर्थे न नञ् पूर्व्वादिति (पा० ५।१।१२१) भावप्रत्ययनिषेधेऽपि ब्राह्मणादिष्वनीश्वरशब्दस्य पाठात् ष्यञि नञः शुचीश्वरेति (पा० ७।३।३०) पक्षे उभयपदवृद्धिः॥ ४९ ॥

जगतीति। दस्रौ नासत्यौ निजात् स्वीयात् अस्मात्पितुः सूर्य्यादधीत्यैवायुर्वेदं पठित्वैव भिषज्यतः। स्वर्लोके चिकित्सां कुरुतः। किम्भूतात् पितुः, जगति वर्त्तमानं तिमिरं अयथ वस्तुदर्शनासामर्थ्यजनकं नेत्ररोगविशेषं चिकित्सतो नाशयतः। आयुर्वेदोक्तप्रतीकारेण शमयतः। तथाऽजस्रजे कमलखण्डे वर्त्तमानां

अपि च शमनस्वसासौ तातस्तातः किमनौचिती
यदयमुदयः कह्लाराणामुदेत्यपमृत्यवे ॥ ५० ॥
उडुपरिवृढः पत्या मुक्तामसं यदपीडय-
दयदपि निशितैर्भानोर्भासां बबाध कुमुद्वती ।

मूर्च्छां सन्तोषमपि नाशयतः, अश्विनाय एव सवर्णोदराविति श्रवणादर्थां मूलभूतत्वादश्विने लोकसमूहे वर्त्तमानां मूर्च्छां विविधव्याधिजनितव्यथाबहुलं मोहमपाकुर्वतः। उपचारचतुरात् कल्याणपार्श्वे यदधीतेन हि राजवैद्यो भवति, तस्मादेवा-स्वपितुरेव वैद्यकमधीत्य ताभ्यामिष्टवैद्यत्वं प्राप्तमित्यर्थः। अपि च किञ्च सर्वभूतानि शमयति नाशयतीति शमनो यमस्तस्यासौ स्वसुस्तातः पिता ततस्तस्मात् कह्लाराणां कुमुदानामपमृत्यवे अकालमरणायोदेति। यत् यतोऽयं सूर्योऽदयो निष्कृपः सोऽस्य सूर्यस्य किमनौचिती अपि तेषाऽनौचित्येव कारणगुणप्रक्रमेणैव कार्ये गुणारम्भाददयताऽपमृत्युदायिता च धर्मिणाप्यस्मात् स्वपितुरेव सकाशात् पठितेत्यर्थः। उदयता सूर्येण तमो नाशितं, कमलान्युन्मीलितानि, कुमुदानि मुकुलितानीति भावः। पितुः आख्यातोपयोग (पा० १।१।२८) इत्यपादानत्वं। भिषज्यतः। कण्ड्वादिः॥ ५० ॥

उडुपतीति। अथमिदानीमस्तं जिगमिषुः उडुपरिवृढश्चन्द्रः तावदयं उदितः सन् अस्तं गतेन पत्या सूर्येण मुक्तां त्यक्तां वियोगिनीं भार्यां पद्मिनीं अत्यन्ताद्भुतराचौ अपीडयत् सङ्कोचितवान्

तदुभयमतः शङ्के सङ्कोचितं निजशङ्कया।
प्रसरति नवार्के कर्कन्धूफलारुणरोचिषि ॥ ५१ ॥
श्रुतिमयतनोर्भानोर्जानेऽवनेरधराध्वना
विहरणजुषः शाखाः साम्नां शतानि दशालिषां।

मधुप करैर्दूषितवान्। यदपि चन्द्रे पद्मिनीं पीडयति सति कुमुदती कुमुदविकासव्याजेन रात्रौ जहास, अतएव तयोः तदुभयं चन्द्रकुमुदिन्यौ कर्कन्धूफलवत् पक्वबदरवत् अरुणरोचिषि ईषद्रक्तकिरणे नवार्के तरुणादित्ये प्रसरति प्रकर्षेण गच्छत्युदयति सति निजशङ्कया स्वकृतानाचारनिमित्तभयेनेव प्रयोजकेन सङ्कोचितं सङ्कोचं प्रापितं निःप्रभीकृतमित्यर्थः। इत्यहं शङ्के मन्ये। सूर्ये उदितः पद्मिनी च विकसिता चन्द्रो निःप्रभोऽस्तमेति कुमुदिनी सङ्कुचितेति भावः। अन्यच्चाप्युक्तं प्रमेयं बोद्धव्यं। कर्कन्धूर्बदरी कोलीत्यमरः। सङ्कोचितमिति ण्यन्तात् कर्मणि निष्ठा, अन्यथा व्याख्याने सङ्कुचितमित्येव स्यात्। तदुभयं निजशङ्कया करणभूतया स्वयमेव सङ्कुचितं कृतात्मानमिति वा व्याख्येयं। कर्कन्धुकुणेति पाठश्चिन्त्यः। ग्रन्थविस्तारभयात् साधकबाधकादिर्नोक्तः सुबुद्धिभिर्विविच्य बोद्धव्यं ॥ ५१ ॥

श्रुतीति। अहिपतिः शेषः ज्योतिःशास्त्रानुसारेण अवनेर्भूमेरधराध्वना अधस्तनेन मार्गेण पातालमार्गेण रात्रौ विहरणजुषः परिभ्रमतः। तथा श्रुतिमयी वेदरूपा तनुर्देहो यस्य तस्यास्य भानोरखिलानां दशशतानि एकसहस्रमेव दशशतानि कठकण्वा-

निशि निशि सहस्राभ्यां दृग्भिः शृणोति सहस्रराः
पृथगहिपतिः पश्यत्यस्य क्रमेण च भास्वराः॥५२॥
बहु न खरता येषामग्रे खलु प्रतिभासते
कमलगुहदस्तेऽमी भानोः प्रवालरुचः कराः।

दिशाखाः निशि निशि रात्रौ रात्रौ बहुत्वफलत्वात् प्रतिफलस्य नेत्रद्वयसद्भावाद्वाभ्यां सहस्राभ्यां दृग्भ्यां सहस्रद्वयपरिमिताभिर्दृष्टिभिरनुक्रमेण युगपत् पृथक् च चक्षुःश्रवस्त्वात् साक्षात् शृणोति पश्यति चेत्यहं जाने। क्रियाद्वये क्रमेण हेतुद्वयं। यतः सहस्रराः स्वरूपेणोदात्तादिस्वरैः सह वर्त्तमानाः स्वराणां शब्दरूपत्वाच्छृणोति। तथा भास्वराः शुक्लभास्वररूपाःशाखाः ततः साक्षात् पश्यति च। रात्रौ पातालगामित्वात्तच स शेषस्य वर्त्तनादेदमयशरीरस्य किरणसहस्ररूपं शाखासहस्रं शेषो नेत्रसहस्रद्वयस्य सत्त्वाद्युगपत् पृथगेकेन नेत्रसहस्रेण शृणोति द्वितीयेन च पश्यतीति युगपत् पृथक्श्रवणदर्शनाभ्यामेव शेषनेत्रसहस्रद्वयस्य सार्थक्यमभूदित्यर्थः। श्रुतिमयतरोरिति पाठे वेदरूपस्य वृक्षस्य शाखा युक्ताः। अध्वना वलिसद्मनेति पाठे वलिसद्म रसातलमित्यभिधानात् स एवार्थः। दृशस्तानीति काकाक्षिवदुभयत्रापि सम्बध्यते। सहस्रराः वोपसर्जनस्येति (पा० ६।३।८२) पाक्षिकत्वात् सभावाभावः॥५२॥

बह्विति। येषां कराणां खरता तीक्ष्णताऽग्रे पूर्व्वाह्णसमये बहु अतितरां न प्रतिभासते स्फुरति, सर्व्वथा नोपलभ्यत

उचितमुचितं जालेष्वन्तःप्रवेशिभिरायतैः
कियदवयवैरेषामालिङ्गिताङ्गुलिलिङ्गिमा ॥ ५२ ॥

इत्यर्थः । यद्वा नञ्समासेन नखरताऽतीक्ष्णता । पूर्व्वाह्ने येषां अतितरां तीक्ष्णत्वाभाव उपलभ्यते खलु निश्चितं । अथच येषामुपरिभागे बहवो नखरा नखाः येषां तत्ता उपलभ्यते तेऽमी प्रत्यक्षदृश्या विकाशहेतुत्वात् कमलानां सुहृदो बन्धोर्भानोः कमलबन्धोर्वा कराः किरणा एव पाणयः प्रवालरुचः विद्रुमवद्रक्तकान्तयः, अथ च प्रकृष्टबालकान्तयः अतिबाला अथच बालपल्लववद्रक्तकान्तयो दृश्यन्त इति शेषः । तथा जालेष्वन्तप्रवेशिभिः गवाक्षादिविवरमध्यप्रविष्टैः अतएवायतैः तदग्राद्दण्डवद्दीर्घीभूतैः कियदवयवैः किरणैः एषां किरणानां पाणीनाञ्च य आलिङ्गितः सम्बद्धः अङ्गुलिलिङ्गिमा अङ्गुलिर्वालिङ्गिमा इचिमाऽथवाऽङ्गुलिभिर्लिङ्गिमा तत् उचितमुचितमिवमतितरा मौचिती । गवाक्षविवरप्रविष्टैः किरणावयवैः किरणानामङ्गुलीतुल्यत्वादाश्रिताङ्गुलिवत्ता युक्तैव, पाणीनामपि दीर्घैः कतिपयैरवयवैरङ्गुलिव्रतता चारुता भवतीत्यपि युक्तमेवेत्यर्थः । अङ्गुलिचारुतेत्यपिपाठः । नखोऽस्त्री नखर इत्यमरः । उचितं वीप्सायां द्विरुक्तिः । प्रवेशिभिस्ताच्छिल्ये आवश्यके वा णिनिः । आलिङ्गिता लिगिधातोः पक्षे कर्म्मणि क्तट्, पक्षे निष्ठा । लिङ्गति रमणीयतया चित्तं प्राप्नोतीति गत्यर्थात् धातोः पचाद्यचि पृथ्वादेराकृतिगणत्वादिमनिच् समर्थनीयः ॥ ५२ ॥

नय नयनयोर्द्राक् पेयत्वं प्रविष्टवतीरमू-
र्भवनवलभीजालाजाला इवार्ककराङ्गुलीः।
भ्रमदणुगणाक्रान्ता भान्ति भ्रमन्त्य इवाद्य याः
पुनरपि धृताः कुन्दे किं वा न वर्द्धकिना दिवः ॥ ५४ ॥

नयेति। भो राजन् त्वं भवनस्य गृहस्योपरि वर्त्तमानानां वलभीनां गृहविशेषाणां जालाङ्कला सविवरात्कृतेर्वलभीमेवा-र्थात् प्रविष्टवतीरमूरर्ककररूपा अङ्गुलीर्जालप्रवेशादङ्गुलीतु-ल्यान् सूर्यकरान् अथच करेष्वङ्गुलीनां युक्तत्वादर्ककराणामङ्-गुलीर्जाला इव कमलदलवद्दीर्घनयनयोर्द्राक् शीघ्रं पेयत्व गोचरत्वं नय प्रापय सादरं पश्य, त्वन्नेत्रयोः कमलत्वाज्जाल-मार्गप्रविष्टास्त्वया विलोक्यमाना एताः स्वमेचकमलनाला इव वर्मैर्द्रक्ष्यन्त इत्यर्थः। जालानां कमलतुल्यत्वात्तन्नाला इव त्वं पश्येति वा। अमूः काः। याः भ्रमतां जालप्रविष्टकिरणमध्ये परिभ्रमतां अणूनां त्रसरेण्वादिरूपरजःकणानां गणेन समूहेन आक्रान्ता व्याप्ता अत एव दिवो वर्द्धकिना स्वर्लोकतक्ष्णा त्वष्ट्रु-रेव विश्वकर्म्मणा पुनरपि कुन्दे शाणचक्रे धृता आरोपिताः सत्यः अद्य भ्रमन्त्य इव किंवा न भान्ति अपि तु तथैव शोभन्ते। यद्वा भ्रमन्तः शाणघर्षणवशात् परितः पतन्तः येऽणवः शाणतेजसः क-णास्तेषां गणैराक्रान्तत्वं युक्तं। विश्वकर्म्मणा सूर्यः शाणमारोपित इति पुराणं। नयनयोराधेयत्वमिति पाठे स एवार्थः। गुणेति पाठे गुणेन वशेनेत्यर्थः। जालात् जातावेकवचनं ॥ ५४ ॥

दिनमिव दिवाकीर्तिस्तीक्ष्णैः क्षुरैः सवितुः करै-
स्तिमिरकबरीलूनां कृत्वा निशां निरदीधरत्।
स्फुरति परितः केशस्तोमैस्ततः पतयालुभिः
ध्रुवमधवलं तत्तच्छायच्छलादवनीतलं ॥ ५५ ॥

दिनमिति। दिवाकीर्त्तिरिव नापित इव दिवसः तीक्ष्णैः सवितुः करैरेव क्षुरैर्निशां तिमिरकबरीलूनां तमोरूपां वेणीं छिन्नमूलां कृत्वा निरदीधरत् निर्द्धारितवान्। मुण्डयित्वा क्वापि बहिष्कृत् केशोऽवशिष्टः स्यादिति गवेषितवानित्यर्थः। अथवा बहिर्निष्क्रामयामास। नापितोऽपि व्यभिचारादिदुष्टां स्वीयां परकीयां वा स्त्रियं क्षुरैर्मुण्डयित्वा देशाद्बहिर्निष्क्रामयति। ततोऽनन्तरं तस्मात् मुण्डनाद्वा परितश्च पतयालुभिरधःपतनशीलैः केशस्तोमैः कृत्वा अवनीतलं तेषां वृक्षादिपदार्थानां छाया प्रतिबिम्बं तस्य छलाद्व्याजेन ध्रुवं निश्चितं अधवलं श्यामं स्फुरति शोभते। वृक्षाद्यधोभागे कृष्णत्वं मुण्डितकबरीपतयालुकेशवृन्दसम्बन्धकृतं न तु प्रतिबिम्बकृतं इत्यर्थः। छायाव्यतिरिक्तं सर्व्वमपि तमो दिवसे सूर्यकरैर्नाशितमिति भावः। दिवाकीर्त्तिस्तु नापित इत्यमरः। कबरी जानपदेति (पा० ४।१।४२) ङीष् लूनां ल्वादिभ्य (पा० ८।२।४४) निष्ठानत्वं। निरदीधरत् धारेर्णिचि चङ्युपधाया ह्रस्वः (पा० ७।४।१) त्युपधाह्रस्वत्वे अभ्यासस्य सन्वद्भावात् दीर्घो लघोरिति (पा० ७।४।९४) दीर्घः। तत्तच्छायेति विभाषासेनेति (पा० २।४।२५) वा नपुंसकत्वं ॥ ५५ ॥

ब्रूमः शङ्खं तव नल यशः श्रेयसे दृष्टशब्दं
यत्सोदर्यः स दिवि लिखितः स्पष्टमस्ति द्विजेन्द्रः ।
शङ्का शङ्खाकरमिह करच्छेदमप्यस्य पश्य
श्यामिस्थानं तदपि नितरां हारिणो यः कलङ्कः ॥५६॥

इदानीं शाङ्खिकानां शब्दं श्रुत्वा तद्व्याजेन नलयशोवर्णनं कुर्व्वन्ति । ब्रूम इति ॥ हे नल वयं श्रेयसे मङ्गलाय दृष्टः श्रुतः शब्दो यस्य तं शङ्खं तव यश एव ब्रूमः, त्वत्कीर्त्तिमेव शङ्खरूपतया वर्णयामः । शाङ्खिकैर्यः शङ्खो वाद्यते तत्त्वद्यश एव, तद्वदुज्ज्वलतरं तव यश इत्यर्थः । शङ्खध्वनो हि मङ्गलदीपकः । त्वद्यशोऽपि लोकानां शुभाय तव पुण्यश्लोकत्वाद्भवति । यस्य शङ्खस्य यशसश्च समुद्रप्रभवत्वाच्छुभ्रतरत्वाच्च सोदर्य्यः समानोदर्य्यो भ्राता स प्रसिद्धो द्विजेन्द्रश्चन्द्रः दिवि स्पष्टं लिखितोऽस्ति निः-प्रभत्वाच्चित्रलिखित इव निर्व्यापारः स्फुटोऽत्र दृश्यत इत्यर्थः । त्वमिह गगने प्रत्यूषसमये वाऽस्य चन्द्रस्य शङ्का निश्चितं शङ्खाकरं शङ्खसहोदरत्वास्तिक्यबुद्धिजनकं करच्छेदं किरणविनाशमपि पश्य, शङ्खेऽपि किरणा न सन्ति अस्यापीदानीं न सन्ति । किञ्चास्य हरिणसम्बन्धी हारिणो यः कलङ्कस्तद्रूपं नितरां अतिशयितं श्यानेः श्यामतायाः स्थानमपि पश्य शङ्खस्याप्युदरभागे नितरां श्यामतास्ति सा चन्द्रेऽपि तस्मादपि चन्द्रस्य शङ्खसोदर्य्यत्वं निश्चितं तथा चन्द्रमपि तव यशो ब्रूम इत्यर्थः । उक्तप्रकारेण शङ्खसोदर्य्यत्वं चन्द्रस्य यद्यप्यस्ति तदपि तथाच हरिण-

सम्बन्धी यः कलङ्कस्तस्य सुतरां ग्लानिस्थानं पश्य। चन्द्रस्य शङ्केयशङ्कभ्रान्त्यलेऽपि निष्कलङ्कं शङ्खमेव तव यशो ब्रूमः। न तु सकलङ्कं चन्द्रमिति भाव इति वा। अथच हे राजन् तव यशःश्रेयसे यशोविवृद्धये सृष्टमब्दं विरचितस्तुतिवाक्यं शङ्ख-नामानं मुनिं ब्रूमः। शङ्खस्तव यशोवृद्धये स्तुतिं चकारेत्यर्थः। यस्य शङ्खमुनेः सोदर्यो भ्राता स लिखितनामा द्विजेन्द्रो ब्रा-ह्मणश्रेष्ठो दिवि स्पष्टमस्ति। इह लिखिते शङ्काकरं मत्यविश्वा-सकारकं शङ्का साक्षाल्लिखितं वा करयोः पाण्योः छेदं कर्त्तन-मपि पश्य। तथा हरमीति हारीतस्तस्य शङ्खस्य भ्रातुरुद्यानफ-लहर्त्तुरस्य लिखितो यः स्वकलङ्कः पापं तदेव ग्लानिस्थानं पश्य। अथच श्रेयसे लोकानां कल्याणाय पुण्यश्लोको सृष्टः मन्त्र इति शब्दो यस्मिन् एवम्भूतं तव यशः शङ्खनामानमृषिं ब्रूमः समा-नधर्मत्वात्, न तु तद्भ्रातरं कलङ्कित्वात्, सोऽपि धर्मार्थं स्तुति-वाक्यानि सृष्टवान्। यस्य भ्रातेति पूर्ववत्। लिखितस्य चौर्य्ये हस्तच्छेदश्च भारते ज्ञातव्यः। शाङ्खिकास्तत्प्रबोधार्थं शङ्खं वा-दयन्ति तस्माच्छीघ्रमुत्तिष्ठेति भावः। लिखितमुनिरेव दिवि ताराशङ्खो जात इति केचित्। समानोदरे शयित इत्यर्थे सोदराद्य इति (पा० ४।४।१०८) यः। अस्मादेव निर्देशाद्यत्प्र-त्ययश्चिवक्षायामेव विभाषोदर इति (पा० ६।३।८८) पाक्षिकः समानस्य सः। हारिणः सम्बन्धेऽण्। पचे ग्रावश्यके णिनिः ॥ ५६ ॥

ताराशङ्कुविलोपकस्य जलजं तीक्ष्णत्विषो भिन्दतः
सारम्भं चलता करेण निबिडां निष्पीडनां लम्भितः।
छेदार्थोपहृताम्बुकम्बुजरजोजम्बालपाण्डूभव-
च्छंखच्छित्करपत्रतामिव वहत्यस्तंगतार्द्धो विधुः॥ ५७॥

तारेति। विश्वासानयनरूपस्य माहमण्डलसम्बन्धस्य शङ्का-कारशङ्कुस्य विलोपकः स्वप्रभया नाशकस्तस्य तथा जलजं कमलानि भिन्दतो विकाशयतोऽथच यतस्ताराशङ्कुविलोपकस्यात-एव जलजं शङ्खं खण्डयतःतीक्ष्णत्विषः सूर्यस्यैव शाङ्खिकशि-ल्पिनः सारम्भं शेघोगं चलता प्रसरता अथच घर्षणवशात् साटोपं गमनागमने कुर्व्वता करेण रश्मिना पाणिना च निबिडां निष्पीडनां बाधां दृढां यन्त्रणाञ्च लम्भितः प्रापितः अस्तं गत-मर्द्धं यस्य एतादृशो विधुश्चन्द्रः शंखच्छेदसौकर्य्यार्थमुपहृतमानीतं यदम्बु जलं तस्य कम्बुजरजोजम्बालः छिद्यमानशंखसञ्जातरजस-यकर्दमः उदकसम्बन्धाद्रजः कर्दमीभवति, तेन पाण्डूभवल्लोह-मयत्वादधवलमपि धवलपङ्कवशात् धवलं भवत्, यच्छंखच्छित् शंखच्छेदकारि करपत्रं तद्भावं इह प्रातः समये वहति चन्द्र इत्यर्थः। शांखिकशिल्पिनो हि छेदसौकर्य्यार्थं छिद्यमानशंखा-दिदेशे जलं चिपन्ति। दृढतरग्रन्थिच्छेदार्थे च करपत्रं करेण निबिडं पीडयति शांखादिच्छेदकरपत्रस्यार्द्धचन्द्राकारं सञ्जा-तरजःपङ्कपाण्डुरस्य भवति। अस्तमितार्द्धश्चन्द्रस्तादृक्करपत्र-तुल्यो दृश्यत इत्यर्थः। सूर्योदयो जातस्तारा लुप्ताः कमलानि

यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमा-
न्दृष्टीः पूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः ।
साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं
यन्मूलाऽऽद्रियतेतरां कविनृभिः पद्मोपमा चक्षुषः ॥ ५८ ॥

विकसितानि चन्द्रोऽर्द्धेनास्तमित इति भावः । अब्जं पक्षे जा-
त्येकवचनं पाण्डुभवदिति क्विः ॥ ५७ ॥

यदिति ॥ अंशुमान् पाथोजानां कमलानां विमुद्रणप्रक-
रणे उन्मीलनप्रस्तावे एव यद्यस्मात् दृष्टीर्लोकनेत्राणि निर्नि-
द्रयति विगतनिद्राः करोति उन्मीलयतीत्यर्थः । यस्माच्च हरिः
श्रीविष्णुः शिवपूजासमये एककमलन्यूनं जलरुहां कमलानां
सहस्रं स्वीयेनाक्ष्णा पूरयति स्म । तत्तस्मात् सरसीरुहां दृशामपि
वास्तवं अबाधितं साजात्यं तुल्यजातीयत्वं अस्ति । यत् साजात्यं
मूलमारोपकारणं यस्यास्तादृशी यन्निबन्धना चक्षुषः पद्मेन
सहोपमा सादृश्यं कविनृभिः कालिदासादिभिः कविभिरा-
द्रियतेतरां अत्यादरेणोपनिबध्यते । यदि नेत्राणि कमलसजा-
तीयानि नाभविष्यन् तर्हि रविः कमलोन्मीलनप्रस्तावे तानि
नोदमीलयिष्यत्, श्रीविष्णुश्च कमलसहस्रं नेत्रेण नापूरयिष्यत्,
नह्यन्यप्रस्तावेऽन्यस्य योग्यताऽस्ति, तस्मात् दृशां कमलानाञ्च सा-
जात्यं वास्तवमस्त्येवेत्यर्थः । उदितः सूर्यः कमलानि विकसितानि
सर्वोऽपि जनः प्रबुद्धः, तस्मात् त्वमपि प्रबुद्धस्वेति भावः । विष्णुः
स्वचक्षुषा कमलसहस्रं पूरितवानिति लिङ्गपुराणादौ द्रष्टव्यं ।

अवैमि कमलाकरे निखिलयामिनीयामिक-
श्रियं श्रयति यत् पुरा विततपत्त्रनेत्रोदरं।
तदेव कुमुदं पुनर्दिनमवाप्य गर्भभ्रम-
द्विरेफरवघोरणाघनमुपैति निद्रामुदं॥५९॥

विमुद्रणेति विगतमुद्रं करोतीत्यर्थे भावे ल्युट्। निर्निद्र-यतीति तत्करोतीति णिच्, पूरयतीत्यत्रापि। समाना जातिः साजात्यमिति विग्रहे चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् समानस्येति योगविभागात् समानस्य सः। वास्तवं आगतार्थे सम्बन्धे वा अण्। तत्त्वपर्य्यायात् वस्तुशब्दात् प्रज्ञादित्वात् स्वार्थे वा। षष्ठ्यो-पमा षष्ठीसमासः॥ ५८॥

अवैमीति। यत्कुमुदं कमलानामाकरे देवखातसरसि वा अथ च कमलायाः लक्ष्म्याः आकरे गृहे कोषागारे विततं विस्तारितं पत्त्ररूपनेत्राणामुदरं येन विततानि पत्त्राण्येव नेत्रमध्यानि येन तत्। विकस्वरं अथ च प्रसारितपक्ष्मनेत्रोदरं उन्मीलितनेत्रं सत् निखिलयामिन्याः सकलाया रात्र्याः सम्ब-न्धिनो यामिकस्य रात्रिचतुःप्रहरप्राहरिकस्य सकलरात्रिजा-गरूकस्य श्रियं शोभां पुरा श्रयति अशिश्रयत्। सायमारभ्य सूर्योदयावधि यद्विकसितमभूत्। अथ च सकलां रात्रिं जजा-गार, तदेव कैरवं पुनरिदानीं दिनमवाप्य गर्भे भ्रमन्तः सूर्य-किरणसम्पर्कसञ्जातशोषसङ्कोचवशान्निर्गन्तुमशक्तेरन्तःसञ्चारिणो द्विरेफास्तेषां निर्बन्धसञ्जातो रवस्तद्रूपा या घोराणा प्रसुप्त-

इह किमुषसि पृच्छाशंसिकिंशब्दरूप-
प्रतिनियमितवाचा वायसेनैष पृष्टः।
भण फणिभवशास्त्रे तातङःस्थानिनौ का-
विति विहिततुहीवागुत्तरः कोकिलोऽभूत्॥ ६०॥

घर्घरा खाण्डवरस्तया घनं निविडं यथा तथा निद्रामुदं निद्रा-
सम्बन्धिसुखं उपैति, अन्तर्गतभ्रमरं सत् सङ्कुचतीत्यर्थः। अथ
च यः कोषागारे सकलां रात्रिं आगर्त्ति स दिवसे घोरणाघनं
यथा तथा निद्रातीत्यर्थः। इत्यहमवैमि मन्ये। पुराश्रयतीति
पुरिलुङ्चास्मे (पा० ३।२।१२२) इति भूते लट्। घोरणेति
घुरेधातोर्णिजन्तात् युच्॥ ५९॥

इहेति। इह प्रभाते पृच्छाशंसिनः प्रश्नवाचिनः किमश-
ब्दस्य प्रथमान्तं रूपं तेनैव प्रतिनियमिता प्रतिक्षणं शब्दान्तर-
भाषणाद् व्यावर्त्तिता वाग्येन कौ कौ इति नियतभाषिणा
वायसेन काकेन फणिनः शेषाद्भवमुत्पन्नं महाभाष्यलक्षणं शास्त्रं
पाणिनीयमिति यावत्। तत्र तातङ्लक्षणस्यादेशस्य स्थानिनौ
आदेशिनौ कौ भण कथयेति पृष्टः कृतप्रश्न एषः कोकिलः
विहिता कृता या तुहीति वाक् सैवोत्तरं यस्यैवम्भूतोऽभूत्। किं
काकः प्रातः स्वभावत एव कौ काविति वदति कोकिलस्तु तुही
तुहीति। काकः स्वभावात् कौ काविति प्रथमद्वितीयवचनान्तं
प्रश्नशब्दं ब्रूते। कोकिलस्तु तुही तुही इति तयोरेषा तुच्-
दिश्च तुही तुह्योस्तातङाशिष्यन्यतरस्यामिति पाणिनिसूत्रस्य-

दाक्षीपुत्त्रस्य तन्त्रे ध्रुवमयमभवत् कोप्यधीती कपोतः
कण्ठे शब्दौघसिद्धिक्षतबहुकठिनी शेषभूषानुयातः।
सर्वं विस्मृत्य दैवात् स्मृतिमुषसि गतां घोषयन्त्यो घुसंज्ञां
प्राक्संस्कारेण सम्प्रत्यपि धुवति गिरः पट्टिकापाठनेन॥६१॥

रणशीलः सन् तु हि स्वाने तातङोविधागात्तुहीति तातङः स्वानिनावित्युत्तरं कोकिलो दत्तवान् किं। प्रभातं जातं काकादयः शब्दायन्त इति भावः। सूत्रवार्त्तिकयोर्महाभाष्येणैव दार्ढ्यापादनात् फणिभवेत्युक्तं। स्वानं प्रबन्धः सोऽस्त्वनयोरिति स्वानिनौ अत इनीति इनिप्रत्ययः (पा०५।२।११५)॥ ६०॥

दाक्षीति। अयं आकर्ण्यमानः कोपि शब्दः कोपि कश्चित् कपोतः घुकलक्षणः पक्षी दाक्षीपुत्रस्य दक्षगोत्रसञ्जातमातृकस्य पाणिनेस्तन्त्रे पाणिनीयव्याकरणे अधीतं पठनमस्यास्तीति अधीती पठितपाणिनीयव्याकरणोऽभवत्। अनेकेषु पाणिनिशिष्येषु मध्ये कोऽपि कपोतरूपः शिष्योऽभूत् ध्रुवमित्यहमुत्प्रेक्षे। किम्भूतः तदध्ययनवशादेव कण्ठे देवादिशब्दौघाणां सिद्धये उदाहरणसाधनाय क्षता घृष्टा बह्वी कठिनी खटिका तस्याः शेषः अङ्गुलीलग्नोऽवशिष्टभागस्तद्रूपया भूषयाऽनुयातः सम्बद्धः खटिकाशेषरेखया कण्ठेऽलेखत् इत्यर्थः। बालादिभिः पट्टिकादौ खटिकया लिखितं पठित्वा सरस्वतीबुद्ध्या सायं लिपिप्रोञ्छनाङ्गुलिलग्नखटिकादिरजसा कण्ठे रेखां रचयन्तीति लोकरीतिः। कपोतस्य कण्ठः स्वभावेनैव धूसरो भवति। यः कपोतः सर्व्वमपि शास्त्रं

पौरस्त्यायां घुसृणसुमनःश्रीजुषो वैजयन्त्याः
क्षौमैश्चित्तं चरति हरिति चीरकण्ठैर्मयूखैः।

विस्मृत्य दैवात् स्मृतिं गतां उषसि प्रातःस्मृतां दाधाघ्वदाविति पाणिनिसूत्रां घुसंज्ञां पुनर्विस्मरणभिया घोषयन् पुनः पुनः पठन् सन् भूयसि कालेऽतीतेऽपि सम्प्रत्यपि प्राक् काष्ठघटितपट्टिकालिखितसूत्रपाठादिपाठनेन संस्कारेण पटुतराभ्यासाहितवासनया शिरो धुवति, विस्मृतस्य प्रातःस्मृतिर्भवति। कपोतस्य प्रातर्घुशब्दं करोति, शिरश्च कम्पयति, तस्मादियमुत्प्रेक्षा। बालाश्च श्यामासु काष्ठघटितपट्टिकासु खटिकादिलिखितं धवलाकारं सूत्रपाठादि आवेशेन घोषयन्तः शिरः कम्पयन्ति। योऽपि विस्मृतं पुनः स्मरति सोऽपि शिरः कम्पयति। दक्षस्यापत्यं अत इञ् (पा० ४।१।९५) इतो मनुष्यजातेरिति (पा० ४।१।६५) ङीप् तन्नोक्तस्य विषयस्य कर्म्मणि सप्तमी। अधीतमनेनेत्यधीती इष्टादेराकृतिगणत्वादिनिः। घोषयन् चौरादिकात् घुषेः शता। धुवति तौदादिकात् धूञ् कम्पन इत्यस्मात्कुटादित्वाद्गुणनिषेधे उवङ् ॥ ६१ ॥

पौरस्त्यायामिति। जाम्बूनदतनुः उत्तमसुवर्णतुल्यस्वरूपोऽतएव प्रकर्षेण वेजयन्ताख्यस्योपरिवर्त्ती सुवर्णकलशरूपोऽसौ भानुः पौरस्त्यायां हरिति प्राच्यां दिशि कुङ्कुमेन युक्तायाः कुङ्कुमवद्धा सुमनसः श्रीः शोभा तां जुषो भजन्त्या वैजयन्त्याः पताकायाः क्षौमैः सूक्ष्मरूपैः चीरयुक्तकण्ठैर्लक्षणयाऽतिबालैर्म-

भानुर्जाम्बूनदतनुरसौ शक्रसौधस्य कुम्भः
स्थाने पानं तिमिरजलधेर्भाभिरेतद्भवाभिः ॥ ६२ ॥

मूर्खैः छला चित्तं हरति। इन्द्रसौधस्योपरि वर्त्तमाना बालतराः सूर्यकिरणास्तदीयरक्तपताकासमूहा इव, सूर्यश्च स्वर्णकलश इव शोभत इत्यर्थः। राजादिप्रासादेषु हि रक्ता भूयस्यः पताकाः सुवर्णकलशाश्च वर्त्तन्ते। यतोऽयं इन्द्रसौधस्य स्वर्णकुम्भरूपोऽत एवैतस्माद्भवाभिरुत्पन्नाभिर्भाभिः कर्त्रीभिः तिमिररूपोऽतिश्यामो जलधिस्तस्य यत्पानं ग्रासेन तिरोधापनं तत् स्थाने नितरामुचितं। कुम्भोद्भवो ह्यगस्त्यः पूर्व्वंसमुद्रमधात्, अतः तासामपि भानुरूपकुम्भोद्भवलात् समुद्रपानं युक्तमित्यर्थः। सूर्य ऊर्ध्वमागतस्तिमिरञ्च सर्व्वं निरस्तमिति भावः। तोकैरिति पाठे तोकमपत्यं पताकाया अपत्यरूपैस्तत्सदृशैरित्यर्थः। पौरस्त्या पुरोदेशे भवा दक्षिणापश्चात्पुरसस्त्यगिति (पा० ४।२।९८) त्यक् किति चेति (पा० ७।२।११८) वृद्धिः। कर्तृकर्म्मणोः कृतीति (पा० २।३।६५) कर्तरि प्राप्तापि षष्ठी उभयप्राप्तौ कर्म्मणीति (पा० २।३।६६) नियमेन व्यावर्त्तितलात् तिमिरजलधेरित्यत्रैव भवति। भाभिरित्यत्र तु कर्त्तरि तृतीयैव ॥ ६२ ॥

द्वित्रैरेव तमस्तमालगहनग्रासे द्रवीभावुकै-
रस्यैरस्य सहस्रपत्रसदसि व्यश्राणि यस्तोत्सवः।
घर्माणां रयचुम्बिनं वितनुते तत् पिष्टपिष्टीकृत-
क्ष्मादिग्व्योमतमोऽघमोघमधुना मोघं निदाघद्युतिः॥ ६३॥

द्वित्रैरिति। तमस्तमालानां तिमिररूपातिश्यामलतरुविशेषाणां गहनस्य गाम्भीर्यस्यैव ग्रासे विनाशे द्रवीभावुकैर्वंनवक्लितां प्रजग्भिः द्वित्रैरल्पसंख्यैरेव अस्य सूर्यस्यास्त्रैः किरणैः सहस्रपत्राणां सदसि आकरे यस्तोत्सवः दिनसम्बन्धी हर्षो विकासो यस्माद्व्यश्राणि वितीर्णः तत्तस्मात् कारणान्निदाघद्युतिः सूर्यः घर्माणामुष्णानां किरणानां ओघं समूहं अधुना द्वित्रैरेव करैस्तमोविनाशे पद्मविकासे च जाते रयचुम्बिनं वेगवत्तरं मोघं निष्फलं वितनुते विस्तारयति। किम्भूतं अतएव पिष्टं पिष्टं अतत्तत्कृतं पिष्टपिष्टीकृतं अत्यन्तचूर्णीकृतं क्ष्मादिग्व्योम्नां भूदिगाकाशानां तम एवाघं मालिन्यात्पातकं येन। तिमिरविनाशस्य कमलविकाशस्य च द्वित्रैरेव किरणैस्तत्करणे पिष्टपेषणवद्वैयर्थ्यमित्यर्थः। दवदावौ वनारण्यवह्नी किरणोस्रमयूखेत्यादि, यस्तो दिनाहनी इत्याद्यमरः। द्वित्राः द्वौ त्रयो वा द्वित्राः सङ्ख्ययाव्ययेति (पा॰ २।२।२५) बहुव्रीहौ, बहुव्रीहौ सङ्ख्येये इति (पा॰ ५।४।७३) डच्। द्रवीभावुकै भुवो लघपतपदेति (पा॰ ३।२।१५४) ताच्छील्यादावुकञ्। व्यश्राणि दानार्थाच्छ्रणातेश्चौरादिकात्कर्मणि चिण्।

दूरारूढस्तिमिरजलधेर्बाडवश्चित्रभानु-
र्भानुस्ताम्यद्वनरुहवनीकेलिवैहासिकोऽयं।
न स्वात्मीयं किमिति दधते भास्वरश्वेतिमानं
द्यामद्यापि द्युमणिकिरणश्रेणयः शोणयन्ति ॥ ६४ ॥

रयर्युक्तमिमं पिष्टपिष्टीकृतमिति च कर्मणि भावे वा निष्ठा ॥ ६३ ॥

दूरेति। अयं भानुः तिमिरजलधेस्तमःसमुद्रस्य शोषकत्वाद्वाडवो बडवानलरूपश्चित्रभानुरग्निस्तथा ताम्यन्त्याः खिद्यन्त्या वनरुहवन्याः कमलवन्या एव कान्तायाः केल्या क्रीडया वैहासिकः परिहासकः क्रीडानर्मकारी, हेलामात्रेण विकासक इत्यर्थः। तथा दूरं गगनमार्गमारूढ ऊर्ध्वमागतः एवम्भूतः सन् स्वात्मीयं स्वीयतेजोरूपत्वात् सहजं भास्वरं श्वेतिमानं स्वपरप्रकाशकं शुक्लभास्वररूपत्वमद्यापि दूरारूढत्वेऽपि किमिति कुतो न दधते धारयति, तथा द्युमणेः सूर्यस्य किरणश्रेणयस्तायापि द्यां गगनं किमिति न शोणयन्ति रक्तीकुर्व्वन्तीति प्रश्नद्वयं। यद्वा स्वीयं रूपं रविर्न धत्त इति कुतो ज्ञातमित्याशङ्क्य प्रत्यक्षं प्रमाणयति, यस्मादद्यापि सूर्यकिरणपंक्तयः शोणयन्ति तस्माद्भास्वरश्वेतिमा सूर्येण न धृत इति ज्ञायत इत्यर्थः। एवंविशिष्टः सूर्यो दूरारूढः सञ्जातस्तस्मादद्यापि सूर्यकिरणाः स्वीयं शुक्लभास्वरत्वं किमिति न दधते न धारयन्ति। ऊर्द्धमागतः सूर्यः कमलानि च विकसितानि तस्माच्छीघ्रमुत्तिष्ठेति भावः।

प्रातर्वर्णनयाऽनया निजवपुर्भूषाप्रसादानदा-
द्देवी वः परितोषितेति निहितामान्तःपुरीभिः पुरः।
स्नाता मण्डनमण्डलीं परिदधुर्माणिक्यरोचिर्मय-
क्रोधावेगसरागलोचनरुचा दारिद्र्यविद्राविणीं॥ ६५॥

चित्रभानुर्विभावसुरित्यमरः। दूरारूढः गम्यादिद्वर्भगात्समासः।
वैहासिक इति विहासे नियुक्तः सप्रयोजनं शिल्पमस्येति।
तत्र नियुक्त (पा॰ ४।४।६९) इति वा शिल्पमिति (पा॰ ४।४।
५५) ठक्। प्रयोजनमिति (पा॰ ५।१।१०९) ठञ्। स्वात्मीयं
वृद्धाच्छः (पा॰ ४।२।११४)। दधते दधधारण इत्यस्यैकवच-
नान्तं धाञश्च बहुवचनान्तस्येति। श्वेतिमा पृथ्व्यादिः। श्रोणं
कुर्वन्तीति तत्करोतीति ण्यन्ताच्चाविष्टवद्भावः पुंवद्भावः ष्टि-
लोपो वा॥ ६४॥

प्रातरिति। स्नाता मण्डनमण्डलीं भूषणश्रेणीं परिदधुः
तत्तदस्तुवर्णाद्यवयवेषु धारयामासुः। किम्भूतां आन्तःपुरीभि-
रवरोधसञ्चारिणीभिः सखीभिरित्युक्त्वा पुरो मागधानामग्रे
निहितां स्थापितां। इति किं। हे मागधाः अनया प्रातर्वर्णनया
प्रयोजिकया परितोषिता नितरां सन्तोषं प्रापिता देवी स्नाता-
भिषेका राज्ञी भैमी निजवपुर्भूषाः स्वीयशरीरालङ्कारभूता-
नेकविधसुवर्णमणिप्रभृतीनि भूषणान्येव प्रसादान् पारितो-
षिकाणि वो युष्मभ्यं अदादिति। पुनः किम्भूतां माणिक्यरो-
चिर्मयया पद्मरागप्रभारूपया क्रोधस्य आवेगः आडम्बरस्तेन

आगच्छन्भणतामुषः क्षणमथातिथ्यं द्वयोरानशे
स्वर्गङ्गाम्बुनि वन्दिनां कृतदिनारम्भाप्लुतिर्भूपतिः ।
आनन्दादतिपुष्पकं रथमधिष्ठाय प्रियायौतुक-
प्राप्तं तैरवरागतैरविदितप्रासादतो निर्गमः ॥ ६६ ॥

सरागत्वोपलक्षणतया अरुणनेपथ्यतया कृत्वा दारिद्र्यस्य विद्राविणी पलायनकारिणी मयि स्थितायामप्यत्र त्वं कथं नाम स्थातुमिच्छसि इति क्रुद्धयाऽनया माणिक्यप्रभारूपनेपथ्यकान्त्या कृत्वा दारिद्र्यं दूरादपसारितं। एवं प्रभातवर्णने क्रियमाणे भैम्या निजशरीरभूषणैस्ते सम्मानिता इत्यर्थः। अन्योऽपि रोषारुणत्वोपलक्षणतया किञ्चिद्विद्रावयति। आन्तःपुरीभिरिति बहुत्वेन माणिक्येत्यादिना भूषणानां भूयस्त्वममूल्यत्वञ्च सूचितं। देवी चेदादित्यनेन च नलः स्नानार्थं गतः प्रासादे नास्तीति सूचितं। प्रातर्लुप्तषष्ठीकमव्ययं। परितोषिता ण्यन्तान्निष्ठा। आन्तःपुरीभिः अत्रभवेऽण्। अन्तःपुरिकेति पाठे अन्तःपुरशब्दात् अन्तःपूर्व्वपदाट्ठञिति (पा० ४।३।६०) भवार्थे ठञ्। रोचिर्मयेति स्त्रियाः पुंवदिति (पा० ४।३।३४) पुंवत् ॥ ६५ ॥

आगच्छन्निति। भूपतिर्नलः वन्दिनां द्वयोरातिथ्यं प्रेक्षणविशेषद्योतितप्रेमभक्तिबाहुल्येन गोचरत्वं आनशे लेभे। किम्भूतानां क्षणमात्रमुषः प्रभातसमयं भणतां वर्णयतां। किम्भूतः स्वर्गङ्गाम्बुनि मन्दाकिनीजले कृतदिनारम्भाप्लुतिः कृतप्रातःस्नातः, तथा अवरागतैर्नलवहिर्गमनानन्तरमागतैस्तैर्मागधै-

रविदितोऽज्ञात: प्रासादतो निर्गम: राजगृहाद्वहिर्निर्गमो यस्य। तथा प्रियायौतुके भैमीपाणिग्रहणसमये कन्यादानप्रतिष्ठाकृतया दीयमाने वस्तुनि मध्ये प्राप्तं अतिपुण्यकं अतिक्रान्तपुष्पकाख्यकुवेरविमानं अतिरमणीयवेगवत्तरं सर्व्वत्राप्रतिहतगमनञ्च रथमधिष्ठायारुह्यानन्दाज्ञवातिशयसञ्जातहर्षादागच्छन्। मागधागमनात् पूर्व्वं न तु वर्णनानन्तरं प्रबुद्धः प्रासादान्निर्गच्छन्नित्यर्थ:। अतएव भैम्यैवेते समानिता इति पूर्व्वश्लोके उक्तं। तस्याः परमधार्म्मिकत्वं सूचितं। ज्ञातदिगारम्भश्रुतिरागच्छन्नित्यनेन वक्ष्यमाणभैमीप्रत्युद्गमनं उक्तरसर्गश्रुतिश्च सूचिता। नलस्य पुण्यश्लोकत्वात् सर्व्वत्राप्रतिहतत्वात् तस्य च रथस्य पूर्व्वमेव सुवर्णाद्रिसमुद्रकापथमित्यादिना सर्व्वत्राप्रतिहतगतित्वोक्तेश्च। अतिपुण्यकत्वोक्तेः स्वर्गगमनोक्तिर्युक्तैव। आगमे अस्तोतेरेति (पा०७।४।७२) नुट्। अतिपुण्यकं अत्यादयः क्रान्ताद्यर्थे इति (पा०२।२।१८।वा०५) समासः। रथं अधिशीङ्स्थासां कर्म्म इत्याधारस्य (पा०१।४।४६) कर्मत्वं। यौतकप्राप्तमिति पाठे कर्तृकरणेति (पा०२।१।३२) समासः। अवरागतैः कालाः इति (पा०२।१।२८) द्वितीया समासः। प्रासादतो निर्गमः पञ्चमीतियोगविभागात् समासः पश्चाद्बहुव्रीहिः॥ ६६॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
एकां न त्यजतो नवार्थघटनामेकान्नविंशे महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः॥ ६७॥

श्रीहर्षमिति। पूर्वार्धः पूर्ववत्॥ मुख्यां नवार्थघटनां नवार्थनिर्मितिमत्यजतोऽमुञ्चतः नूतनमेव प्रमेयं सर्व्वत्र वदतः श्रीहर्षस्य। एकान्नविंशः विंशतेः पूरण इत्यर्थे डटि विंशतेर्डितीति (पा० । । ) लोपे च विंशः। तत एको नविंश इति, तृतीयेति योगविभागात् समासे एकादिश्चैकस्य चाऽदुगिति (पा० ६।३।७६) नञाः प्रकृतिभावः एकशब्दस्यादुगागमश्च ॥ ६७॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे एकान्नविंशः सर्गः॥

---

नास्य द्विजेन्द्रस्य बभूव पश्य
दारान् गुरोर्यातवतोऽपि पातः ।
प्रवृत्तयोऽप्यात्ममयप्रकाशान्
नश्यन्ति न श्वाग्निमहोऽभ्युपात्तान् ॥ १२० ॥

नेति । हे प्रिये द्विजेन्द्रस्यास्य चन्द्रस्यास्य गुरोर्बृहस्पतेर्दा-
रान् भार्य्यां यातवतोऽपि गुरुतल्पगामिनोऽपीत्यर्थः पातः स्व-
र्गाद् भ्रंशः, अथ च पातित्यं न बभूव पश्य । चित्रमेतद्विलोकये-
त्यर्थः । अथ वा युक्तमेतत् । प्रवृत्तयो धर्म्माधर्म्महेतुकर्म्मारम्भा
अपि आत्ममय आत्मस्वरूपमेव प्रकाशो येषां तान् प्रकाशा-
न्तरनिरपेक्षान् प्रकाशस्वरूपान्, अथ च परमात्मैव प्रकाशो
येषां तान् परमात्मस्वरूपातिरिक्तप्रकाशानभिज्ञान् स्वप्रका-
शात्मवादिनो ब्रह्मज्ञानिनोऽग्निमहेद्धं तेजोरूपशरीरं पूर्णतां
वा प्राप्तान्, अथ चानन्तरभाविमोक्षत्वात् प्रवीनशरीरप्रवाहा-
पेक्षया शेषशरीरं प्राप्तान् जीवन्मुक्तान् पुरुषान् हि यस्मान्न
नश्यन्ति शुभाशुभफलसम्बन्धेन न संबध्नन्तीत्यर्थः । तेषां तेजो-
विशेषेण प्रत्यवायो न विद्यत इति प्रामाणिकवचनात् तेजो-
रूपस्यास्य चन्द्रस्य पातो नाभूदिति युक्तमेव, नात्र चित्रमिति
भावः । चन्द्रोऽप्यात्ममयप्रकाशः, अग्निमहेद्धं सम्पूर्णतां प्राप्तः
॥ १२० ॥

स्वधाहृतं यत् तनयैः पितृभ्यः
श्रद्धापवित्रं तिलमिश्रमम्भः।
चन्द्रं पितृस्थानतयोपतस्थे
तदङ्करोचिः खचिता सुधेव॥ १२१॥

पश्योच्चसौधस्थितिसौख्यलभ्ये
त्वं केलिकुल्याम्बुनि बिम्बमिन्दोः।
चिरं निमज्ज्येह सतः प्रियस्य
भ्रमेण यच्चुम्बति राजहंसी॥ १२२॥

स्वधेति। तनयैः पुत्रैः श्रद्धया परलोकास्तिक्यबुद्ध्या पवित्री-त्वात् पवित्रं कृष्णतिलैर्मिश्रं मिश्रितं पितृभ्यः स्वधाहृतं यदम्भः पितृस्थानतया "चन्द्रो वै पितृलोकः" इति श्रुतेः। पितृलोकतया चन्द्रमुपतस्थे चन्द्रेण सङ्गतमभूदित्यर्थः। तत् कृष्णतिलमिश्रजल-मेवाङ्कस्य कलङ्कस्य या रोचिः कान्तिः तया खचिता मिश्रिता सुधा पीयूषं। कृष्णतिला एव कलङ्कसंलग्नं जलमेव पीयूषं न लभ्यः, कलङ्को न चान्यत् पीयूषमित्यर्थः। श्रद्धेति पितृलोक-प्राप्तौ हेतुगर्भविशेषणं। उपतस्थे सङ्गतकरणे तङ्॥ १२१॥

पश्येति। हे प्रिये त्वमुच्चसौधस्थितया कृत्वा सौख्येन निरन्त-रायं लभ्ये दृश्ये केलिकुल्याया अम्बुनि तदिन्दोर्बिम्बं पश्य। तत् किं। राजहंसी इव कुल्याजले निमज्ज्य चिरं सतोऽन्त-र्वर्त्तमानस्य प्रियस्य राजहंसस्य भ्रमेण यच्चन्द्रबिम्बं चुम्बति। सौख्यं स्वार्थे सुखिनो भाव इति भावे वा ष्यञ्। सौस्थ्येति पाठे

सौवर्गवर्गैरमृतं निपीय
कृतोऽस्ति तुच्छः शशलाञ्छनोऽयं।
पूर्णोऽमृतानां निशि तेऽत्र नद्यां
मग्नः पुनः स्यात् प्रतिमाच्छलेन ॥ १२३ ॥
समं समेते शशिनः करेण
प्रसूनपाणाविह कैरविण्याः।

सूक्ष्मत्वेन लक्ष्ये। उपान्तरदेशस्थितं मध्यधोदेशस्थितं वस्तु सूक्ष्मं प्रतिभातीत्यर्थः ॥ १२२ ॥

सौवर्गेति। स्वर्गे भवाः सौवर्गा देवास्तेषां वर्गैर्वृन्दैरमृतं निपीयास्ति तुच्छो रिक्तः कृतोऽयं शशलाञ्छनो निशि ते तवात्र क्रीडानद्यां प्रतिमाच्छलेन प्रतिबिम्बव्याजेन मग्नः सन् पुनरमृतानां जलैरथ च पीयूषैः पूर्णः स्यात्, भवेदित्यहं सम्भावयामीत्यर्थः। एतेन नदीजलस्यामृततत्वं सूचितं। अस्ति तुच्छः कृतोऽपि पुनः क्रमेणामृतैः पूर्णः सन् रात्रौ तव क्रीडानद्यां प्रतिमाव्याजेन मग्नः पुनः पानभयादिव पलाय्य निलीनः स्यादित्यहं शङ्क इति वा। पूर्णोऽमृतानां तृप्त्यर्थत्वात् करणे षष्ठी ॥ १२३ ॥

सममिति। इह तव क्रीडानद्यां कैरविण्याः कुमुदिन्याः प्रसूनरूपे पाणौ शशिनः करेण रश्मिनाऽथ च पाणिना समं सह समेते सङ्गते सति मधु पुष्परस एव जलं यस्य तस्य त्याग-प्रधानस्य कन्यादानसम्बन्धिसङ्कल्पोदकस्याभिषेकः कर्ताऽनयोः स-

विवाहलीलामनयोरिवाह
मधुच्छलत्यागजलाभिषेकः ॥ १२४ ॥
विकासिनीलायतपुष्पनेत्रा
मृगीयमिन्दीवरिणी वनस्था।
विलोकते कान्तमिवोपरिष्टा-
न्मृगन्तदेवाऽऽननचन्द्रभाजं ॥ १२५ ॥

चन्द्रकुमुदिन्योर्विवाहलीलामाहेव सूचयतीव। चन्द्रकरस्पर्शमा-त्रेण कुमुदानि विकसितानि मकरन्दपूर्णानि च जातानीति भावः। विवाहे उभयोः पाणिमेलनं, पाणौ दानजलाभिषे-कोऽपि भवति॥ १२४ ॥

विकासीति। हे प्रिये इह तव केलिनद्यां वनस्था जलनि-वासिनी मृग च काननस्था, तथा विकासि नीलमायतं विस्तृतञ्च पुष्पमेव नेत्रं यस्यास्तत्तुल्यनेत्रा चेयं प्रत्यक्षदृश्या इन्दीवरिणी यस्मान्मृगी वनस्थत्वाद्विकासिनीलायतपुष्पनेत्रत्वाच्च हरिणी तत्तस्मादिन्दीवरिणीरूपा मृगी माननमिव यश्चन्द्रः साम-र्थ्यात् त्वदाननतुल्यो यश्चन्द्रस्तद्भाजं तत्स्थं कान्तं सुन्दरमथ च तुल्यजातीयं स्वप्रियं मृगमुपरिष्टाद्विलोकते। विकसितकुसु-मनेत्राणि ऊर्द्धप्रसारितानि दृश्यन्ते तर्हि प्रायेण चन्द्रस्थमुपरि वर्त्तमानं निजभर्त्तारं मृगं मृगी पश्यतीत्यर्थः। त्वदाननमेव यश्चन्द्रस्तत्स्थं चन्द्रत्वादनुमेयमृगमुपरिष्टात् पश्यति। त्वं प्रा-सादोपरि वर्त्तसे, इयञ्चाधोदेशे वर्त्तते नवेति पदच्छेदं कृत्वा

तपस्यतामम्बुनि कैरवाणां
समाधिभङ्गे विबुधाङ्गनायाः ।
अवैमि रात्रेरमृताधरोष्ठं
मुखं मयूखस्मितचारु चन्द्रं ॥ १२६ ॥

चन्द्रभाजं निजप्राप्तेयं मृगमुपरिष्टान्न पश्यतीति न किन्तु पश्यत्येवेति व्याख्येयं । वनस्था मृगी हि लोलायतनेत्रा सती स्वकान्तं मृगमितस्ततो विलोकयतीत्यर्थः । अग्रमित्यपपाठः । मृगपर एव वा व्याख्येयं ॥ १२५ ॥

तपस्यतामिति । हे प्रिये, अम्बुनि सदा निवासात् तत्र तपस्यतां कैरवाणां कुमुदानां समाधेर्दिवासङ्कोचस्यैव ध्यानस्य भङ्गे त्याजने विषये निमित्ते वा विबुधाङ्गनाया अप्सरोरूपाया रात्रेश्चन्द्रं मुखमेवाहमवैमि मन्ये । किम्भूतं मुखं । अमृतमेवाधरोष्ठं यस्या, अथ चामृततुल्योऽधरोष्ठं यस्य यद्वाऽमृतमधरं यस्मात् पीयूषादधिकरस ओष्ठो यस्य, तथा मयूखा एव स्मितं । अथ च तत्समाधिभङ्गादेव चन्द्रकरवदुज्ज्वलं यत् स्मितं तेन वा चारु । चन्द्रविशेषणे लिङ्गविपरिणामः । देवाङ्गनानामप्येवंविधं मुखं रात्रौ अतो तपस्यतां दुष्करं तपश्चरतामपि मुनीनां समाधिभङ्गं करोति । तपस्यतामिति तपश्चरन्तीत्यर्थे कर्मणो रोमन्थतपोभ्यामिति (पा० ३।१।१५) क्यङ्, तपसः परस्मैपदञ्चेति मता ॥ १२६ ॥

अस्याङ्कपङ्का विधुमण्डलीयं
पीयूषनीरा सरसी स्मरस्य।
पानात् सुधा नाम जलेऽप्यमृत्यु
चिह्नं बिभर्त्त्यक्षयं स मीनं॥ १२७॥

तारास्थिभूषा शशिजह्नुजाम्ब-
चन्द्रांशुपांशुच्छुरितद्युतिर्द्यौः।
छायापथाश्लिष्टफणीन्द्रहारा
खं मूर्त्तिमाह स्फुटमष्टमूर्त्तेः॥ १२८॥

अस्येति। अस्योऽङ्क एव पङ्को यस्यां, तथा पीयूषमेव नीरं यस्यां सेयं विधुमण्डली स्मरस्य सरसी विलासं सर एव, अत एव सरोऽवभवमस्यां चन्द्रसरस्यां समुत्पन्नं सुधानामेतल्लोका-मृतपानीयजले अनवरचितेऽपि सुखे जलाभावेऽपि चाऽमृत्युं मरणरहितं मीनं चिह्नमथ च सुधासरोजातत्वादनुमापकं चिह्नं बिभर्त्ति। मीना हि जलादहिर्भूता म्रियन्त एव, अयन्तु न म्रियते तस्माच्चन्द्रामृतसरसीभवत्वात् सदामृतपानाज्जला-भावेऽपि मृत्युरहित इति सर्वं युक्तमित्यर्थः॥ १२७॥

तारेति। द्यौः खमात्मानमष्टमूर्त्तेर्हरस्य मूर्त्तिं शरीरं स्फुटं व्यक्तमाह ब्रवीति, यतः तारा एवास्थीनि तद्रूपा भूषा यस्याः, तथा शशिनमेव जह्नुजां गङ्गां बिभर्त्तीति तद्भृत्, तथा च-न्द्रांशव एव पांशवो भस्मानि तैः छुरिता लब्धाङ्गरागा द्युति-र्यस्याः सा, तथा छायापथो गगने दृश्यमानाकारा रश्मिपीतसरस्यः

एकैव तारा मुनिलोचनस्य
जाता किलैतज्जनकस्य तस्य ।
ताताधिका सम्पदभूदियं तु
सप्ताञ्चिता विंशतिरस्य ताराः ॥ १२९ ॥
मृगाक्षि यन्मण्डलमेतदिन्दोः
स्मरस्य तत्पाण्डुरमातपत्रं ।

धवला रेखा छद्म यस्य छायापथरूपः फणीन्द्रो वासुकिः स एव मुक्ताहारो यस्या सा हरमूर्त्तिरप्युक्तविशेषणविशिष्टा, क्षीरप्रेताद्दृशीति मूर्त्त्यन्तरापेक्षया व्यक्तमेव महेशस्य मूर्त्तिर्गगनं कथयतीवेत्यर्थः ॥ १२८ ॥

एकेति । एतस्य चन्द्रस्य जनकस्य तस्य प्रसिद्धस्यात्रिमुनिलोचनस्य तारा कनीनिका किलैकैव जाताऽभूत् किल पुराणादौ। अस्य तत्पुत्रस्य तु पुनरियं दृश्यमाना सम्पत् तातान्निजपितुरत्रिनेत्रात् सकाशादधिका,यद्यस्मादस्य ताराः कनीनिका अथ च नक्षत्राणि सप्तभिरन्विता विंशतिरभूदिति छलं। पितुः सकाशादधिकसम्पत्तिलात् सभाग्योऽयमिति भावः। “सप्तविंशतिमिन्दवे” इति दक्षः सप्तविंशतिकन्या अश्विन्यादिकाश्चन्द्राय ददाविति पुराणं ॥ १२९ ॥

मृगाक्षीति । हे मृगाक्षि हरिणीनेत्रे यदेतत् प्रत्यक्षदृश्यमिन्दोर्मण्डलं, तत् स्मरस्य पाण्डुरं श्वेतं साम्राज्यसूचकमातपत्रमेव। श्वेतच्छत्रदर्शने सति समाजो वश्या भवन्ति पूर्वधवल-

यः पूर्णिमानन्तरमस्य भङ्गः
स छत्रभङ्गः खलु मन्मथस्य ॥ १३० ॥

दशाननेनापि जगन्ति जित्वा
योऽयं पुराऽपारि न जातु जेतुं ।
ग्लानिर्विधोर्मानिनि सङ्गतेयं
तस्य त्वदेकाननिर्जितस्य ॥ १३१ ॥

चन्द्रमण्डलस्य चोद्दीपकत्वात् तद्दर्शने सर्व्वेऽपि कामस्य वश्या भवन्ति तस्मादेतत् कामस्य श्वेतातपत्रमेवेति भावः। यस्य पूर्णिमानन्तरमेतस्य छत्रभूतस्येन्दुमण्डलस्य भङ्गो मोटनं कलाक्षयस्य स मन्मथस्य छत्रभङ्गः खलु, छत्रस्य मोटनं राज्यक्षयं सूचयति। कृष्णपक्षे चोद्दीपकमिव चन्द्रक्षये कामः क्षीण एव तस्मात् कृष्णपक्षे योऽस्य भङ्गः स कामस्य छत्रभङ्ग इव सएवं वेति भावः। खलूत्प्रेक्षायां, निश्चये वा ॥ १३० ॥

दशेति। दिग्विजयोद्यतेन दशाननेनापि जगन्ति जित्वाऽपि योऽयं चन्द्रः पुरा पूर्व्वं जातु कदाचिदपि जेतुं नापारि हे मानिनि स्वमुखसाङ्कं चन्द्रमस्रमाने नैमित्तस्यास्य विधोरियं प्रत्यक्षदृश्यकलङ्करूपा ग्लानिर्लज्जा सङ्गता लग्ना, अथ च युक्तैव। यतस्त्वयैकेनाननेन नितरां जितस्य। यो हि दशाननेन दशभिरपि मुखैर्जेतुं नाशकि तस्य स्त्रियास्त्वयैकेन मुखेन निर्जितत्वे लज्जया मालिन्यमुचितमेवेत्यर्थः। त्वन्मुखमेतस्मादधिकमिति भावः। लज्जया ग्लानिर्भवतीति प्रतीयमानोत्प्रेक्षा।

दृष्टा निजां तावदियन्त्यहानि
जयन्नयं पूर्व्वदशां शशाङ्कः ।
पूर्णस्त्वदास्येन तुलां गतस्ते-
दनन्तरं द्रक्ष्यसि भङ्गमस्य ॥ ११२ ॥
शस्त्राणि रामः परिभूय रामात्
शस्त्राद्यथाऽभज्यत स द्विजेन्द्रः ।

रावणस्तन्त्रं जेतुं प्रवृत्तस्तुषाराग्निना दह्यमानः कम्पमानतनुः
तमजित्वैव परावृत्त इति उत्तरकाण्डे कथा ॥ १११ ॥

दृष्ट इति । अयं शशाङ्क इयन्त्येतावन्ति अहानि शुक्लपक्ष-
दिनानि तावदवधीकृत्य निजां पूर्व्वदशां पूर्व्वपूर्व्वदिनावस्थां
जयन् निकाममुत्तरोत्तरदिनेषु कलावृद्ध्याऽधिकीभवंस्तथा
दृष्टः, इयन्ति दिनानि जयंस्तावज्जयन्नेव दृष्ट इत्यवधारणार्थो
वा तावच्छब्दः, अनयैव परिपाट्या पूर्णबिम्बोऽयं त्वदास्येन सह
तुल्यं साम्यमथ च तोलनकाष्ठं गत आरूढस्तेत्तदनन्तरं निकटं
त्वमेव श्वः प्रभृत्येवास्य भङ्गं पराजयं कलाक्षयञ्च द्रक्ष्यसि, उ-
त्तमेन सह स्पर्द्धमानो हि भङ्गं प्राप्नोत्येव। तुलादिव्येन हि
हीनस्य पराजयः सर्व्वैर्दृश्यते । अहानि अत्यन्तसंयोगे द्वितीया।
त्वदास्येनेति तुल्यार्थैरतुलोपमाभ्यामिति (पा॰ २।३।७२) नि-
षेधेऽपि सह योगे तृतीया। तथा च कालिदासस्तुलां यदा-
रोहति दन्तवाससेत्यादि ॥ ११२ ॥

शस्त्राणीति । द्विजेन्द्रो जमदग्न्यपत्यत्वात् सोऽतिप्रसिद्धपराक्र-

तथैव पद्मानभिभूय सर्व्वां-
स्त्वदास्यपद्मात् परिभूतिमेति ॥ १२१ ॥
अन्तः सलक्ष्मीक्रियते सुधांशो
रूपेण पश्ये हरिणेन पश्य ।

सो रामः परशुरामः सर्व्वाणि क्षत्राणि परिभूयापि क्षत्रादेव रामाद्दाशरथेः सकाशात् यथाभज्यत पराभवं प्राप तथा तेनैव प्रकारेण एषोऽपि द्विजराजः सर्व्वान् पद्मानभिभूय सङ्कोचकरणात् पराभूयापि त्वदास्यपद्मात् सकाशात् परिभूतिं पराभवमेति सकलक्षत्रियाधिक्यं यथा श्रीरामस्य तथा सर्व्वपद्माधिक्यं त्वन्मुखपद्मस्येति भावः । वा पुंसि पद्ममित्यमरः ॥ १२१ ॥

अन्तरिति । हे पश्ये चन्द्रदर्शनप्रवृत्ते भैमि हरिणेन पाण्डुरेण रूपेण वर्णेन कर्त्रा सुधांशोरन्तः प्रान्तभागः पूर्व्वमश्रीकोऽपीदानीं सलक्ष्मीक्रियते सलक्ष्मीकः क्रियते त्वं पश्य । अथ च चन्द्रस्य मध्यं हरिणेन मृगेन कर्त्रा रूपेण स्वीयनीलवर्णेन कृत्वा असलक्ष्म सलक्ष्म क्रियते सलक्ष्मीक्रियते सकलङ्कं क्रियत इत्यर्थः । पश्य एव स नल इत्यमुना प्रकारेणास्य चन्द्रस्यान्तं पर्य्यन्तभागं कदाचिदीक्षमाणां भैमीमदर्शत्, दर्शयामास । कदाचिच्चान्तर्मध्यभागं दर्शयामास । अङ्गुल्यादिना चन्द्रस्यैतन्नीलप्रान्तमध्यभागप्रदर्शनपूर्व्वश्लिष्टपदैस्तया सह क्रीडां चकारेति भाव इति मध्ये कवेरुक्तिः । हरिणः पाण्डुरः पाण्डुरित्यमरः । अन्त इत्यकारान्तमेकञ्च अन्तरित्यव्ययमपरञ्च मध्यवाचि । स-

इत्येष भैमीमदद्वाददस्य
कदाचिदन्तं स कदाचिदन्तः ॥ १३४ ॥
सागराम्बुनिविलोचनोदरा-
द्युद्भ्याद्जनि तेन किं द्विजः ।
एवमेव च भवन्नयं द्विजः
पर्य्यवस्यति विधुः किमत्रिजः ॥ १३५ ॥

भीमशब्दस्य समासान्तविधेरनित्यत्वात् कबभावे सतब्भीमशब्दा चिः । पक्षे सतब्भूमशब्दाश्रिः । पक्षे पाघ्राध्मेत्यादिना (पा० ७। ३।७८) कर्त्तर्य्येव शः । दृशेर्बुध्यर्थत्वादृति बुद्धीति (पा० १।४। ५७) अणौ कर्त्तुर्णौ कर्म्मत्वाद्भैमीमिति द्वितीया ॥ १३४ ॥

सागरादिति । अयं चन्द्रः सागराम्बुनिविलोचनोदराख्येत-द्रूपाद्द्वयात् सकाशाद् यद्यस्मादजनि, उत्पन्नस्तेन कारणेन द्वाभ्यां जातत्वाद् द्विजः किं, एवमेव चागयैव रीत्या द्वाभ्यां जातत्वादेव द्विजो भवन्नप्ययं विधुरत्रेर्मुनेर्जातः किं कथं पर्य्य-वस्यति, द्वाभ्यां जातत्वे सत्यपि अत्रिमुनेरेव जात इति तात्प-र्य्यवृत्त्या कथमुच्यत इत्यर्थः । अथ चैवमेव यथा अनेन प्रकारेण द्विजत्वं तथैवात्रिमुनिजो भवन्नयं द्विजः पर्य्यवस्यति । किं द्वाभ्यां जातत्वात् यथा द्विज उच्यते तथा द्विजादत्रिमुनेर्जातत्वादपि द्विज उच्यते, द्विजोत्पन्नो हि द्विज एव भवतीत्यर्थः । अथ च द्वाभ्यां जातत्वाद्द्विजोभवन्नेवं न त्वेभ्यो जात इत्यत्रिज इति तात्पर्य्यवृत्त्या कल्प्यते । यो हि द्वाभ्यां जायते स त्रिजो न

ताराविहारभुवि चन्द्रमयीं चकार
त्वम्मण्डलीं हिमभुवं मृगनाभिवासां।
तेनैव तन्वि सुकृतेन मते जिनस्य
स्वर्लोकलोकतिलकत्वमवाप धाता॥ १३६॥

भवति, एवमेवायमभिज्ञः कथ्यते किमित्यर्थः। द्विजस्त्विज्ञो न भवत्येव॥ १३५॥

तारेति। हे तन्वि त्वमाक्षि धाता ताराणां नक्षत्राणां विहारभुवि गगने चन्द्रमयीं मण्डलीं बिम्बं जिनस्य पुराणपुरुषस्य श्रीविष्णोर्मते ऽनुमतौ सत्यां तदादिष्टः सन् यच्चकार निर्ममे तेनैव सुकृतेन शोभनेन लोकोत्तरव्यापारेण कृत्वा स्वर्लोकः स्वर्गभुवनं तत्सम्बन्धिनां लोकानां सुराणां मध्ये तिलकत्वं श्रेष्ठत्वमाप। किम्भूतां मण्डलीं। हिमस्य तुषारस्य भुवं स्थानभूतामतिशीतलां, तथा मृगस्य नाभौ मध्ये वासो यस्यास्तां, यस्या मध्ये मृगोऽस्तीति यावत्। तादृशीं। अन्येषां सुराणामेतादृग्व्यापारकरणे सामर्थ्याभावात् ब्रह्मैव श्रेष्ठोऽभूदित्यर्थः। अथ च ताराया बुद्धदेव्या विहारस्थाने हिमभुवं शीतलां शुभ्रत्वाद्धिमाचलरूपां वा, तथा मृगनाभेः कस्तूर्याः वासः परिमलोऽवस्थानं वा यस्यां तां कस्तूरीमिश्रितां चन्द्रमयीं कर्पूरमयीं कर्पूरराशिं यच्चकार तेनैव पुण्येन जिनमते बौद्धदर्शने ब्रह्मा सुरश्रेष्ठत्वमधत्त। बौद्धा हि बुद्धदेवप्रासादे यस्तत्पूजार्थं कस्तूरीराशिं करोति स लोकमध्ये श्रेष्ठो भवतीति स्वदर्शने प्रत्यपा-

इन्दुं मुखाद्बहुतृणं तव यद्गृणन्ति
नैनं मृगस्त्यजति तन्मृगतृष्णयैव।
अत्येति मोहमहिमा न हिमांशुबिम्ब-
लक्ष्मीविडम्बिमुखि वृत्तिषु पाशवीषु॥ १३७॥

इयम्। अस्या चैवमकृत तस्मादेव सर्व्वश्रेष्ठा जात इत्यर्थः। तेनै-
वेति पाठे उत्प्रेक्षा। बुद्धदेव्यां मतां तारा॥ १३६॥

इन्दुमिति। हे हिमांशुबिम्बस्य लक्ष्म्याः शोभाया विडम्बि
तस्मात् न्यूनत्वात् परिहासकारि ततोऽप्यधिकशोभं मुखं यस्या-
स्तादृशि भैमि पण्डिता इन्दुं तव मुखात् सकाशात् त्वन्मुखम-
पेक्ष्य वा बहुतृणमीषदसमाप्तं तृणं तृणत्वमपि यस्य पूर्णमस-
म्पन्नं तृणादपि निःसारमिति यावत्। अथ च बह्वधिकं तृणं
यस्मात् तृणादपि निःसारं यद्यस्मात् गृणन्ति, तत्तस्माद्धेतोर्मृग
एनं चन्द्रं मृगसम्बन्धिन्या तृष्णया कोमलतृणकवलनाभिला-
षेणैवाथ वा चन्द्रे प्रयुक्तस्य बहुतृणशब्दस्य बहूनितत् तृणञ्च
बहूनि तृणानि यस्मिंस्तादृशमित्येव रूपार्थग्रहणरूपया भ्रा-
न्त्यैव न त्यजति। मृगो हि बहु च तृणं बहुतृणं देशं वा न
मुञ्चति। नन्वनुभवे सत्यप्यासंसारं कथं भ्रान्तिबाहुल्यमित्याश-
ङ्क्यार्थान्तरन्यासमाह। पाशवीषु पशुसम्बन्धिनीषु वृत्तिषु व्याप-
रेषु विषये मोहमहिमा भ्रान्तिबाहुल्यं नात्येति, बहुकालाति-
क्रमे नापयाति। पशवो हि सर्व्वदा मूढा एवेत्यद्यापि मृगस्य
भ्रान्तिर्नापयाति तस्मादेनं न त्यजतीति युक्तमित्यर्थः। मुखात्

स्वर्भानुना प्रसभपानविभीषिकाभि-
र्दुःखाकृतैनमवधूय सुधा सुधांशुं
स्वं निह्नुते सितिमचिह्नममुष्य रागे-
स्ताम्बूलताम्रमवलम्ब्य नवाधरोष्ठं ॥ १३८ ॥

तुब्लोपे पञ्चमी। बहुव्रचमीषदसमाप्तौ विभाषासुपो बहु-
चिति (पा०।६।२।७४) पञ्चच् ॥ १२७ ॥

स्वर्भानुरिति। हे प्रिये सुधा एनं सुधांशुमवधूय त्वक्का-
नवाधरोष्ठमवलम्व्यामुष्य रक्तस्योष्ठस्य रागे रक्तवर्णे: कृत्वा सि-
तस्य भावः सितिमा धावल्यमेव चिह्नं यस्य तादृशं धवलरूप-
मपि स्वमात्मानं निह्नुते पुनः स्वर्भानुपानभिया तिरो दधाति।
यतः स्वर्भानुना वारंवारं प्रसभपानेन विभीषिकाभिर्भयोत्पा-
दनैः कृत्वा दुःखाकृता प्रातिलोम्याचरणोत्पादितदुःखा। कि-
म्भूतमधरोष्ठं। प्रसिद्धस्य ताम्बूलस्येव ताम्रो वर्णो यस्य ताम्बू-
लेनैव वा ताम्रं रक्तवर्णं। पुना राहुपानभिया त्वदधरमेव स्था-
नान्तरमाश्रित्य रूपान्तरेणात्मानं गोपायतीत्यर्थः। अन्योऽपि
सभयं स्थानं हित्वा स्थानान्तरमाश्रित्य तत्रापि रूपान्तरं
धृत्वा स्वं निह्नुते। सुधया चन्द्रस्य परित्यागात् त्वन्मुखाश्रयणात्
त्वन्मुखं चन्द्रादधिकमिति भावः। ताम्बूलताम्रमित्युक्तरीत्योप-
मोत्प्रेक्षा वा। दुःखाकृता दुःखात् प्रातिलोम्ये इति (पा०५।
४।६४) डाच् ॥ ११८ ॥

हर्य्यक्षीभवतः कुरङ्गमुदरे प्रक्षिप्य यद्वा शशं
जातस्फीततनोरमुष्य हरिता सूतस्य पत्न्या हरेः ।

हर्य्यक्षीति । हे प्रिये मतभेदेन कलङ्करूपं कुरङ्गं यद्वा शश-
मुदरे मध्ये प्रक्षिप्य जाता स्फीता पूर्णा तनुर्यस्य हरेरिन्द्रस्य पत्न्या
हरिता प्राच्या दिशा सूतस्य तत्रोदितस्य पूर्णत्वात एव हरेः
श्रीविष्णोर्वामाक्षीभवतः । यद्वा सञ्जातपूर्णशरीरस्य मृगं यद्वा
शशं कलङ्कं मध्ये निक्षिप्य मध्यस्थितकलङ्कस्य कनीनिकातुल्यत्वात्
श्रीविष्णोर्वामनेत्रीभवतोऽमुष्य चन्द्रस्य त्वद्वदनाम्बुजात् सका-
शाच्चन्द्रः पराजयोऽजनि तदेकाकिनः सर्व्वदा असहायादेक-
स्मात् पद्मात्,न त्वन्यस्मात् कमलात्, न ह्यन्यैः पद्मैरयं पराजीयते
प्रत्युतायमेव पद्मानि पराजयतीत्यर्थः । अथ वाऽम्बुजतुल्यात्
त्वद्वदनादेव पद्मादथ च पद्मसङ्काकात् त्वद्वदनरूपादम्बुजाद् च-
न्द्रस्य भङ्गो जातस्तदेकाकिनोऽसहायस्य स्यात्, भवेत्, बहुभिरेकः
पराजीयत इति युक्तमेवेत्यर्थः । यः सिंहिकायाः सुतो राहुः स
पुनरेकोऽन्योऽस्य प्रतिभटः प्रतिमल्लः पराभावुको राहुरेव न
त्वन्य इति। सम्प्रतीति पाठे,अस्य पुनरस्त्येकः भटः प्रतिभटः सिंहि-
कायाः सुतः स्यादेकाकिनोऽस्य त्वन्मुखपद्मः प्रतिद्वन्द्वी न भवति
अतुल्यत्वात्, किन्त्वेकाकी राहुरेवास्य प्रतिभटो युक्त इत्यर्थः ।
किञ्च स्वशत्रुभूताद्राहोरप्यस्मान्यः पराजय इति महदस्य कष्टं
प्राप्तमित्यर्थः । अथ च हरिदर्णया हरेः सिंहस्य पत्न्या सिंहि-
कया प्रसूतस्य तथा मृगं शशं वा यं कञ्चन पशुं जठरे निक्षिप्य

भङ्गस्त्वद्वदनाम्बुजादजनि यत् पद्मात्तदेकाकिनः
स्यादेकः पुनरस्य स प्रतिभटो यः सिंहिकायाः सुतः ॥१२९॥
यत्पूजां नयनद्वयोत्पलमयीं वेधा व्यधात् पद्मभू-
र्वाक्पारीणरुचिः स चेन्मुखमयं पद्मः प्रिये तावकं ।

भयित्वा स्थितत्वात एव सञ्जातपुष्टशरीरत्वात एव हर्यक्षी-
भवतः सिंहतां प्राप्नुवतोऽस्य त्वन्मुखात् यः पराजयोऽजनि स
एकाकिनः केवलात् पद्मादम्बुजादेव पराजयः। सिंहस्य गजा-
द्भङ्गो यथा तद्वदेतन्महच्चित्रमित्यर्थः। अथ च पद्मवत्स्वाकारै-
कस्य पराजयः। सिंहोऽप्येको बहुपक्षैः पराजीयत एवेत्यर्थः।
अथ च पद्मात्करभादृष्टपदादेव भङ्गः सिंहस्य केवलमदृष्टपरा-
देव भङ्गः, पद्मचन्द्राभ्यां सकाशात् त्वन्मुखमधिकमिति भावः।
हर्यक्षः केसरी हरीत्यमरः। गजाजकरभाः पद्मा इत्यनेकार्थ-
भाजः। प्रथमपक्षे हर्यक्षिसम्बन्धिः, द्वितीयपक्षे हर्यक्षसम्बन्धा-
देव ॥१२९॥

यदिति। हे प्रिये वेधा नयनद्वयमेवोत्पलं तन्मयीं तद्रूपां
तदुचितां यस्य पद्मस्य पूजां व्यधात्, व्यरचयत्। यतोऽसौ
श्रीविष्णोर्नाभौ वर्त्तमानात् पद्माद्भवतीति पद्मभूः। स हि स्व-
जनकस्य पद्मस्य पितृभक्त्या नेत्रद्वयेनैव नीलोत्पलयुगेन सपर्ता
पूजामकृतेति भावः। वाक्पारीणा वाचः परतीरे भवा वाचा
वर्णयितुमशक्या रुचिर्यस्य सोऽयं पद्मश्चेत् तावकं मुखं स एव भव-
न्मुखरूपो जात इत्यर्थः। अनन्तरं ब्रह्मणा स्वपितृमुख्या नेत्र-

कः शीतांशुरसौ तदा भवमृगव्याधोत्तमाङ्गस्थल-
स्थायुस्स्वस्तटिनीतटावनिवनीवानीरवासो वकः ॥ १४० ॥

नीलोत्पलाभ्यां कृतपूजनत्वादत्र तव मुखे नीलोत्पलं दृश्यत इत्यर्थ इति चेत् तर्हि असौ शीतांशुः को नाम, अपि तु न कश्चित्, त्वन्मुखस्य पुरस्तादयं कः, स्मरणार्होऽपि नेत्यर्थः। तर्हि असौ क इति चेत् तत्राह। अयं वकः। किम्भूतः असौ इत्यमय एव मृगस्य व्याधो हरस्तस्योत्तमाङ्गं शिरस्तल्लक्षणे स्थले स्थायुः स्थितिशीला स्वस्तटिनी गङ्गा तस्यास्तटावन्यां तीरभूम्यां या वनी महदरण्यं वा यत् काननं तत्र ये वानीरा वेतसास्तन्मध्यवासी। चन्द्रस्य हरजटाजूटवासीति प्रसिद्धं। वाक्पारीणरुचिरिति ब्रह्मविशेषणं वा। यत्र यदपत्यस्य ब्रह्मणोऽपि सौन्दर्यं वागगोचरस्तत्पितुः पद्मस्य सौन्दर्यं मनसोऽपि गोचरो न भवतीत्यर्थः। त्वन्मुखस्य चन्द्रस्य च महदन्तरं साम्यसम्भावनाऽपि नास्तीति भावः। एतेन चन्द्रादिसुन्दरवृन्दं ब्रह्मणा सृष्टं, भवदीयमुखपद्मं तु ब्रह्मणोऽपि स्रष्टृत्वात् सर्वाधिकमिति सूचितं। भवमृगेत्यादिना चन्द्रस्यातिरैन्यं सूचितं, त्वन्मुखसाम्यप्राप्त्यर्थं तपश्चरणं सूचितं। अन्योऽपि विशिष्टवस्तुप्राप्तये शिवस्नानयुक्तनदीतीरवानीरवासी तपस्यति। नदीतीरवानीरवासित्वं वकजातिः। वाक्पारीणा, भवार्थे राष्ट्रावारपाराद् घखौ (पा० ४।२।९३ वा० १) इत्यत्रापि विगृहीतादपीति वचनात् खः ॥ १४० ॥

जातं शातक्रतव्यां हरिति विहरतः काकतालीयमस्या-
मश्यामत्वैकमत्यस्थितसकलकलानिर्म्मितेर्निर्म्मलस्य ।
इन्दोरिन्दीवराभं बलविजयिगजग्रामणीगण्डपिण्ड-
द्वन्द्वापादानदानद्रवलवगलनादङ्कमङ्के विशङ्के ॥ १४१ ॥

जातमिति । अहं इन्दोरङ्के बलविजयिन इन्द्रस्य गजग्रामणीर्हस्तिषु मध्ये प्रधानं प्राच्यामेव वर्त्तमानो य ऐरावतस्तस्य गण्डयोःकपोलयोः पिण्डयोः शिरःस्थितकुम्भस्थलयोश्च ये द्वे द्वन्द्वे गण्डद्वन्द्वं पिण्डद्वन्द्वञ्च ते एवापादानं निर्गमनस्थानं येषां ते च ते दानद्रवलवा मदजललेशाश्च तेषां गलनात् सम्पर्कात् काकतालीयमाकस्मिकं दैवसिद्धमिन्दीवराभं नीलोत्पलतुल्यं जातमेकं कलङ्कं विशङ्के मन्ये । किम्भूतस्येन्दोः । अस्यामङ्गुलीनिर्द्दिष्टायां पुरोदृष्टायां शतक्रतोरियं शातक्रतवती तस्यां हरिति दिशि विहरत उद्गच्छतः, तथाऽश्यामत्वे विषये ऐकमत्यं सर्व्वसंवादस्तेन तत्र वा स्थिताभिर्वर्त्तमानाभिः सकलाभिः पञ्चदशभिरपि कलाभिः कृत्वा निर्म्मितिर्यस्य, अश्यामत्वैकमत्येन स्थिता सकलकलानिर्म्मितिर्यस्य तादृशस्य वा । अत एव निर्म्मलस्य प्रत्येकं कलानां धावल्यस्य दृष्टत्वाद्धवलसकलकलानिर्म्मितत्वात् कारणधावल्याद्धवलस्य, अश्यामत्वैकमत्येन स्थिता याः सकलाः कलास्ताभिर्या निर्म्मितिस्तस्या वा हेतोर्धवलस्य पूर्व्वकारणधावल्यात् सकलोऽप्ययं धवल एवाभूत्, पश्चात् तु पूर्व्वदिग्भ्रमणवशात् तत्रैव भ्रमत ऐरावतस्य कपोलकुम्भस्थलगलन्मदजलं दैववशा-

अंशं षोडशमामनन्ति रजनीभर्त्तुः कला वृत्तय-
न्त्येनं पञ्चदशैव ताः प्रतिपदाद्याराकवर्द्धिष्णवः।

सन्नं तेनायं मध्ये कालः प्रतिभातीत्यर्थः। तालतरुतले यदैव काकस्य उपवेशनं तदैव दैवात् काकस्योपरि तालफलपात इति काकतालमिव काकतालीयं समासान्ताच्छः। निर्मितेः पञ्चे हेतौ पञ्चमी॥१४१॥

अंशमिति। हे प्रिये लोका रजनीभर्त्तुः शोडशमंशं कलामामनन्ति सत्यं कथयन्ति, ताश्च षोडशांशरूपाः प्रतिपत् आदिर्यस्मिन् कर्मणि राकां पूर्णिमामभिव्याप्य वर्द्धिष्णवः प्रतितिथि एकैकाभिवृद्ध्या वर्द्धमानाः पञ्चदशसङ्ख्याका एव कला एनं चन्द्रं वृत्तयन्ति वर्त्तुलं कुर्व्वन्ति तिथिसङ्ख्यासाम्यात् पूर्णमण्डलं कुर्व्वन्तीत्यर्थः। या पुनः कला षोडशीं तिथिमृते उद्धृता प्रयोजनाभावाचन्द्राद्बहिष्कृता सा षोडशी कला शेषा पञ्चदशकलाभ्योऽवशिष्टा सती, यद्वा षोडशीं तिथिं विना प्रयोजनाभावाद्याऽवशिष्टा, सा निष्प्रयोजनत्वादुद्धृता चन्द्राद्बहिर्निष्काशिता सती हरालङ्कृतिः शिवशिरोभूषणं जाता किं, चन्द्रे प्रयोजनाभावाद्धरालङ्कृतिरिवाभूत् किमित्यर्थः। अहं तस्यास्तोद्धृतायाः षोडश्याः कलायाः सम्बन्धिकं नभोनीलिम्ना सह वर्त्तमानं स्थानस्य पूर्व्वावस्थितेः सम्बन्धि विलं विवरं तत्स्थानवस्थितत्या कृत्वा शून्यं नीलं नभोभागमेवेह चन्द्रमण्डलमध्ये कलङ्कं पश्यामि किं, मध्यवर्त्तिनीलं तत् स्थानं विलमेवाहं कलङ्कत्वेन शङ्के इत्यर्थः। शेषशब्दस्याभिधेयलिङ्गत्वं पूर्व्वमेव दर्शितं।

या शेषः पुनरद्भुता निषिच्यते सा किं वराकस्तुति-
स्तस्याःस्थानमिलं कलङ्कमिव किं पश्यामि सश्यामिकं॥१४२॥
ज्योत्स्नामाद्यते चकोरशिशुना द्राघीयसी लोचने
लिप्सुर्मूलमिवोपजीवितुमितः सन्तर्पणात्मोज्झनात्।

पूर्णे राका निशाकर इत्यमरः। तत्तयन्ति तत्करोतीति (पा० ३।१।२६ वा० १) णिच्। वर्द्धिष्णवः, अलङ्कृञिति (पा० ३।२।१३६) इष्णुच्। निषिच्यते घृतेन पात्रमिति वत्। श्यामिकेति मनो-ज्ञादेराकृतिगणत्वाद्भावे वुञ् ॥ १४२ ॥

ज्योत्स्नामिति। हे मुग्धे सुन्दरि तवत्वं वृत्तत्वादिगुणैः समानमपि नयनश्रियाऽपि तत्त्वाऽनधिकं समानमेव, लिप्सुरत एव स्वस्य द्राघीयसी अतिदीर्घे लोचने लिप्सुं स्वयमिच्छुर्विधु-श्चकोरशिशुना प्रयोगेण स्वीयां ज्योत्स्नामाद्यते भक्षयति। तन्नोत्प्रेक्षते। चन्द्रिकामृतपानजनितसम्यक्तर्पणेनात्मोच्छ्रितात् स्वप्रीतिजनितचकोरबालकात् सकाशान्मूलं स्वचन्द्रिकापानहेतु-भूतमेतदीयातिदीर्घनेत्रद्वयमध्येषु उपजीवितुमाहर्तुमिव। यद्वा किञ्चित् स्वचन्द्रिकां पाययित्वा ततो नेत्रद्वयसकाशात्प्राप्त्वा मूलं चन्द्रिकारूपमूलधनं वर्द्धयितुमिव। अन्योऽप्युत्तमर्णोऽधम-र्णाय किञ्चिद्दत्त्वा तं वशीकृत्योत्तममिष्टं वस्तु ततो गृह्णाति तथा-ऽयं चन्द्र आहूत आदरयुक्तः सन् स्वपक्षे मध्येऽयथोचितं रक्षां क-रोति, अनल्पधारणेन लालयतीत्यर्थः। किमर्थमित्याकाङ्क्षायाम्। तन्मूलभूतमतिविशालं तदीयनयनयुगलं परिग्रहीतुमिव संवर्धं क-

अङ्के रङ्कुमयं करोति च परिद्रष्टुं तदेवाहत-
स्त्वद्वक्त्रं नयनश्रियाऽप्यनधिकं मुग्धे विधित्सुर्विधुः ॥ १४२ ॥
लावण्येन तवास्यमेव वेधसा तत्पात्रमात्रस्पृशा
चन्द्रः प्रोञ्छनलब्धतार्द्धमलिनेनारम्भि शेषेण तु ।

र्तुमेव। त्वन्मुखसाम्यनिमित्तरमणीयनेत्रद्वयं सम्पादनीयं। चन्द्र-
चकोरहरिणौ वञ्चयतीत्यर्थः। चन्द्रादुत्कृष्टं त्वन्मुखमिति भावः।
परिद्रष्टुमिति पाठे, एतन्नेत्ररामणीयकप्राप्त्युपायं द्रष्टुमिवेत्यर्थः।
विधित्सुः सम्पतार्थ्ये इति दर्शयितुं विधित्सुपदं। आद्रियते, अर्देर्निगर-
णार्थत्वेऽप्यदेः प्रतिषेधो वक्तव्यः (पा० १।३।८७वा० १) इति वक्तव्या-
न्निगरणादिपरस्मैपदाभावे णिचश्चेति (पा० १।३।७४) तङ्। द्रि-
गुणा आदिखाद्योर्नेति (पा० १।४।५२वा० १) अणौ कर्मत्वाभावः।
द्राघीयसी अतिशायने इयसुनि प्रियस्थिरेति (पा० ६।४।१५७)
द्राघादेशः, विधुर्विधित्सुरिति च नलोकेति षष्ठीनिषेधः॥ १४२॥

लावण्येति। हे प्रिये वेधसा क्वचित् पात्रे सञ्चितेनाखिलेन
लावण्येन कृत्वा तवास्यमेवारम्भि निर्मितं, चन्द्रस्तु पुनः तस्य
लावण्यस्याधारपात्रं स्पृशतीति स्पृक् तेन लावण्यस्थानपात्रमात्र-
स्पर्शनात एव प्रोञ्छनेन पात्रनिघर्षणेन कृत्वा लब्धता उपार्जि-
तत्वं तेनार्द्धं कियत् खण्डं मलिनं यस्य तेन किञ्चिन्मलिनेन शे-
षेण भवन्मुखनिर्माणावशिष्टेनांशेन कृत्वाऽऽरम्भि निर्मितः। अत
एव शेषमक्षलोऽयं शोभत इत्यर्थः। शेषेण तु निर्मित इति वा।
विधिना एतत्त्वन्मुखमृगाङ्कलक्षणद्वयं निर्माय सदा अपि पात्रौ

निर्म्माय द्वयमेतदम्बु विधिना पाणी खलु चालितौ
तल्लेशैरधुनाऽपि नीरनिलयैरम्भोजमारभ्यते ॥ १४४ ॥
लावण्येन तवाखिलेन वदनं तत्पाणिमाचस्पृशा
चन्द्रः प्रोञ्छनलब्धमार्द्रमलिनेनारम्भि शेषेण यः ।

प्रक्षालितौ खलु,लावण्यलेपक्षालनजलक्षालनाविव, तस्मात् तस्य क्षालनरजोमिश्रितलावण्यलेपस्य लेशैरल्पैरंशैरेव कर्द्दमैरधुनाऽपि नीरनिलयैर्जलस्थायिभिः पङ्किरम्भोजमारभ्यते, निर्म्मीयते, कमलनिर्म्माणे प्रयासः कोऽपि प्रयासो नेत्यर्थः । कमलाच्चन्द्रोऽधिकस्तस्मादपि त्वन्मुखलावण्यं शाकल्येन निर्म्मितत्वादधिकमिति भावः । अन्योन्यं आत्येकवचनं ॥ १४४ ॥

लावण्येति । अखिलेन लावण्येन तव वदनमारम्भि: ततो भवद्वदनकामनीयवर्णनाचिन्ताऽपि दूरे तिष्ठतु, अशक्यकरत्वादित्यर्थः । उक्तरीत्या तत्पाणिमाचस्पृशा प्रोञ्छनलब्धतार्द्रमलनेन शेषेण यश्चन्द्रो विधिना निरमायि तस्य लेखाऽपि लावण्यनिर्म्मितस्य चन्द्रस्य षोडशांशरूपकलामात्रत्वादेव निष्कलङ्कत्वात् सुषमया परमशोभया कृत्वा अहंकृत्या अस्यापेक्षयाऽहमेव रमणीयेति दर्पमवलम्ब्य शम्भोः शिखामणिः शिरोभूषणमभूत्, शिवशिरोऽध्यारोहत् । अन्यदपि सदर्पमुत्तमशिरोऽधिरोहति । अब्जं कुमुदं कर्त्तृ यद्यस्मात् तस्य चन्द्रस्य पदं प्रतिविम्बस्थानं अलमस्पृशत्, अतः श्रियः सद्माभूत्, चन्द्रकरसम्पर्कादेव हि कुमुदं सश्रीकं भवति पद्मञ्च श्रियः पद्माभूत्

यल्लेखाऽपि शिखामणिः सुकुसमयाऽचं कृत्य शम्भोरभू-
दब्जं तस्य पदं यदस्पृशदतः पद्मञ्च सद्म श्रियः ॥ १४५ ॥
सपीतेः सम्प्रीतेरजनि रजनीशः परिषदा
परीतस्ताराणां दिनमणिमणिग्रावमणिकः ।

अब्जस्य चन्द्रकिरणस्पर्शात् पद्मस्य तन्नोत्पन्नत्वादर्चमानत्वात् कुमुदस्य दर्शनाच्च पद्ममपि लक्ष्म्याः स्थानमभूत्। यद्वा पद्मस्यातः कुमुदाद्धेतोः श्रियः सद्माभूत्, एकजातियोगात् कुमुदाधारजलयोगाच्च कुमुदादेव परम्परया पद्मानां लक्ष्मीगृहत्वमभूदित्यर्थः। यद्वा या लेखा शम्भोः शिखामणिरभूत् तस्य शिखामणिभूतस्य चन्द्रस्य पदं स्थानं शिवमस्तकपूजासमये यस्मात् कुमुदं पद्मञ्चास्पृशत्, अतस्तदुभयं श्रियः सद्माभूत्, चन्द्रस्य वह्निशिरःसम्बन्धादुभयं श्रीस्थानमभूदित्यर्थः। यद्वा तस्य शम्भोः पदं चरणं पूजावशाद्यस्मात् कुमुदं पद्मञ्चास्पृशत् तस्मादुभयं श्रीसद्माभूत्। तस्य लावण्यस्थानं विधिहस्तलावण्यलेपक्षालनजलं यस्मात् कुमुदं पद्मञ्चास्पृशत्,यद्वा पद्ममेवास्पृशत्,यतोऽब्जं तस्मात् कुमुदं पद्मञ्च पद्ममेव वा श्रीसद्माभूदिति वा। त्वन्मुखलावण्यलेशपरम्परासंस्पर्शप्राप्तशोभानि चन्द्रादीनीति। त्वन्मुखलावण्यं वाङ्मनसगोचरं न भवतीति भावः। अर्थान्तरस्य स्पष्टत्वात् पूर्वोक्तस्य त्वर्थान्तरप्रतिपादनार्थमनुवादत्वाच्चायं श्लोकः पुनरुक्तः। अहमिति विभक्तिप्रतिरूपकमव्ययं ॥ १४५ ॥

सपीतेरिति। हे प्रिये सम्प्रीतेस्ताराणामन्योऽन्यं सम्बन्धया

प्रिये पश्योत्प्रेक्षाकविभिरभिधानाय सुशकः
सुधामभ्युद्धर्त्तुं भृतशशकनीलाश्मचषकः ॥ १४६ ॥

प्रीतिः सौहार्दं तस्माद्धेतोर्या सपीतिः सहपानं, सुहृदो हि सह-
पानं कुर्व्वन्ति, तस्माद्धेतोः, यद्वा सहपानाद्धेतोर्या सम्यक् प्रीती
रित्यभिहितिस्तस्माद्धेतोस्ताराणां परिषदा सङ्घेन परीतः सम-
न्तात् व्याप्य रजनीशो हिमकरमणिः सूर्य्यकान्तमणिस्तस्य
ग्रावा शिला तेन घटितोऽतिधवलः स्तूपः पेयद्रव्याधारभूतो
मणिकोऽलिञ्जर एवाजनि, सम्भूतः। विधिना तारापरिषदा
वा क्वचिदिति पश्य। कीदृशः। सादृश्येन वस्त्वन्तरसम्भाव-
नारूपायामुत्प्रेक्षायां विषये कविभिर्विशिष्टसम्भावनाचतुरैः
श्रीहर्षादिभिर्मेधाकविभिस्तारापरिषदैव सुधामभ्युद्धर्त्तुं धृतो
यो मध्यस्थितः शशकः कलङ्कः स एव नीलाश्मा नीलमणिस्तेन
घटितं चषकं पानपात्रं यस्मिन्नेवम्भूत इवायमिति अभिधा-
नाय वर्णयितुं सुशकः सुखेन शक्यः। चन्द्रो धावल्यात् पीयूष-
पूर्णः सूर्य्यकान्तमणिक इव, कलङ्कश्च नीलमणिघटितं चषकमिव
दृश्यते तत् पश्येत्यर्थः। यथा मणिकस्योदकाद्युद्धरणाय मणिक-
मुखे चषकः स्थाप्यते तथा ताराभिः परस्परं मिलित्वा सुधा-
पानं कर्त्तुं परिवेष्टितस्य सुधापूरितस्यास्यापि चन्द्रमणिकस्य
मुखे सुधोद्धरणाय शशनामनीलमणिचषको निहित इत्युत्प्रे-
क्षितुं शक्यत इत्यर्थः। चषकोऽस्त्री पानपात्रमित्यमरः। सपीतेः,
वोपसर्जनस्येति (पा० ६।३।८२) वा। सहस्य स इति (पा० ६।३।

आस्यं शीतमयूखमण्डलगुणानाकृष्य ते निर्म्मितं
शङ्के सुन्दरि शर्व्वरीपरिवृढस्तेनैष दोषाकरः ।
आदायेन्दुमृगादपीह निहिते पश्यामि सारे दृशौ
त्वद्वक्त्रे सति वा विधौ धृतिमयं दध्यादनन्धः कुतः ॥१४७॥

७८) योगविभागाद्वा समासः। कविभिः स्वार्थयोगात्र षष्ठी। सुशक इति स्वम् ॥ १४६ ॥

आस्यमिति। हे सुन्दरि विधिना शीतमयूखस्य मण्डलं बिम्बं तस्य दृश्यत्वाह्लादकत्वादिगुणानाकृष्य गृहीत्वा ते आस्यं यतो निर्म्मितं तेन गुणशून्योत्कर्षेण हेतुना शर्व्वर्याः परिवृढः प्रभुश्चन्द्रो दोषाणामाकर उत्पत्तिस्थानं न तु दोषा रात्रिस्त-स्कारित्वाद्दोषाकर इत्यहं शङ्के। तथा अहं इन्दोर्मृगात् सका-शात् सारे दृशावादाय अतिश्रेष्ठे नेत्रे गृहीत्वा इव भवन्मुखे निहिते स्थापिते इत्यहं शङ्के। तेन कुतो ज्ञातमित्यत आह सु-न्दरतरे त्वद्वक्त्रे आगतके सति अनन्धश्चक्षुषानुभवतारतम्यवि-चारचतुरोऽयं मृगो विधौ चन्द्रे धृतिं स्थितिमथ च समीची-नाधारपरितोषं कुतो वा दध्याद्धारयेदपि तु न कथञ्चित्, तस्मात्त्वेनोद्धरणादन्धत्वेनैव त्वन्मुखरामणीयकादर्शनादत्र ग-न्तुमशक्तेश्च त्वन्मुखं त्यक्त्वाऽत्रैवायं स्थित इत्यर्थः। त्वन्मुखं च-न्द्राधिकं। नेत्रे च मृगनेत्राभ्यामधिके इति भावः। सारमिति क्वचित् पाठः ॥ १४७ ॥

शुचिरुचिमुडुगणमगणनममुमति
कलयसि कृशतनु न गगनतटमनु।
प्रतिनिशमशितलविगलदमृतमृत-
रविरथहयचयखुरविलकुलमिव॥ १४८॥
उपनतमुडुपुष्पजातमास्ते
भवतु जनः परिचारकस्तवायं।

शुचीति। हे कृशतनु त्वं गगनतटं नभःस्थलमनु लक्षीकृत्य शुचिरुचिं श्वेतकान्तिं, तथा बहुलादगणनं सङ्ख्यातुमशक्यममुमनुभूयमानं उडुगणं प्रतिनिशं रात्रौ शशितला-च्चन्द्राधोभागाद्विगलता स्रवताऽमृतेन मृतं पूर्णं रविरथस्य हय-चयस्य खुराणां यानि विलानि न्यासस्थानविवराणि तेषां कुलं वृन्दमिव नातिशयेन कलयसि, अपि तु तद्विवातितरां जानीहीत्यर्थः। प्रतिनिशं चन्द्रात्स्रवता धवलेनामृतेन पूर्णाः सूर्याश्वखुरगर्त्ता इव तारकाः शोभन्त इति भावः। गगनतटं कर्मप्रवचनीययोगे द्वितीया। प्रतिनिशं वीप्सायामव्ययीभावः। सर्वं लघु॥ १४८॥

उपनतमिति। हे प्रिये रक्तो भौमः शनिः कृष्णो गुरुः पीतः सितः कविरित्यादिज्योतिःशास्त्रादिप्रामाण्यान्नानावर्णाकृतीन्युडूनि नक्षत्राण्येव पुष्पजातमुपनतं सम्पन्नमास्ते। अयं मल्लक्षणो जनः प्रारब्धकामदेवपूजायामेव परिचारकश्चन्दनाद्युपचारो-पनायकोऽथ च सम्भोगकारी भवतु, त्वं तिलैस्तिलकितः सश्रा-

तिलतिलकितपर्य्यटाभमिन्दुं
वितर निवेद्यमुपास्व पञ्चबाणं ॥ १४९ ॥
स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भव-
श्वभ्रालीपतयालुदीधितिसुधासारस्तुषारद्युतिः ।

ततिलकश्चिह्नैरेव वा तिलकवान् कृतो यः पर्य्यटः शालितण्डुलपिष्टरचितश्चिपिटस्तिलशष्कुलीसञ्ज्ञ उपदंशविशेषस्तदाभा यस्य तत्तुल्यं सकलङ्कमध्यलादिविशिष्टपर्य्यटसदृशमिन्दुमेव निवेद्य कामाय वितर, एवं पञ्चबाणं कामदेवमुपास्व पूजय। अन्योऽपि देवपूजकः पुष्पादिसामग्र्या देवं पूजयति, कश्चित् परिचारकोऽपि तस्य भवति, एवमत्रापि सर्व्वाणि नक्षत्राण्युदितानि, कामोद्दीपकश्चन्द्रोऽप्युदितः, सुरताकार्य्यकारी निषिद्धः सन्ध्यासमयोऽतिक्रान्तस्तस्मात् काममुपास्व सुरतेच्छुरसीति भावः। पञ्चबाण इत्यनेन कामस्यातिपीडाकारित्वं सूच्यते। सामान्यमित्यभिधानाज्जातशब्दः सामान्यवाची पुष्पमात्रे पर्य्यवस्यति। तिलकितेति तारकादित्वात् तत्करोतीति वा (पा० ३।१।२६ वा० १) णिजन्तान्निष्ठा ॥ १४८ ॥

इदानीं काव्यसमाप्तिं चिकीर्षुः श्रीहर्षो नायकमुखेनाशिषमाशास्ते। स्वर्भानुरिति। हे प्रिये देवः प्रकाशमानस्तुषारद्युतिर्हिमकरोऽथ च हिमकर एव देवो वर्णनां पूजास्य कुर्व्वतां नोऽस्मदादीनामावयोर्वा तुष्टये परमानन्दायास्तु। किम्भूतः। स्वर्भानो राहोः प्रतिवारं पौनः पुन्येन यत् पारणं चन्द्रस्यैव गिलनं

पुष्पेष्वासनतत्प्रियापरिणयानन्दाभिषेकोत्सवे
देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ १५० ॥

तेन तच्च वा मिलन् संलग्नो यो रन्ध्रोघस्तद्रूपं यच्छिद्रकरण-
साधनं तस्मादुद्भवो यस्याः सा यासौ रन्ध्रसंघनकृतविवरपर-
म्परा तया तस्याः सकाशाद्वा पतयालुः पतनशीला दीधिति-
सुधा किरणामृतं तद्रूपः सारः श्रेष्ठो भागो यस्य दीधितिसुधा-
या वा। यद्वा दीधितिसुधाया आसारो धारासम्पातो दीधि-
तिसुधारूपो वा आसारो यस्य स अत एव पुष्पेष्वासनस्य पुष्पध-
नुषस्तत्प्रियाया रतेश्च परिणयानन्दो विवाहरूप आनन्दस्तस्य-
न्निन्नभिषेकोत्सवे महाभिषेकार्थं प्राप्ता सहस्रधारस्य सहस्र-
च्छिद्रगलज्जलधारस्य कलशस्येव श्रीः शोभा येन सः। महोत्सवे
हि सहस्रधारेण सुवर्णकलशेन महाभिषेकः क्रियते तथा च रा-
हुदन्तकृतच्छिद्रपरम्परागलदमृतधारश्चन्द्रो गलज्जलधारसह-
स्रच्छिद्रसुवर्णकलश इव शोभमानः पूर्वोक्तवर्णनयोक्तविधल-
कृतपूजया च सुरतप्रवृत्तयोरावयोरुद्दीपकतया परमानन्दं
कुर्यादिति भावः। एतेन तत्समयोचितरतिकामविवाहोत्स-
वाभिधानेन चन्द्रोऽस्तु नस्तुष्टये इत्यनेन च विलासिना नलेन
स्वनिर्वर्त्यद्वितीयपुरुषार्थपयोधिपीयूषरसास्वादनलालसोऽभिव्य-
ज्यते। सुधाधार इत्यपि पाठे दीधितिसुधाया धारा यस्य
सुधाया आधार इति वा, आनन्दपदेन तुष्टयेऽस्त्वित्याशिषा च
ग्रन्थसमाप्तिं द्योतयति। महाभारतादौ वर्णितस्याप्युत्तरनलच-

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं ।
द्वाविंशो नवसाहसाङ्कचरिते चम्पूकृतोऽयं महा-
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १५१॥
यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी
कुमाराणामन्तःकरणहरणं कैव कुरुते ।

रिमस्य नीरसलाञ्नायकागुरवर्णने रसभङ्गसद्भावाच्च काव्यस्य च सहृदयहृदयाह्लादनफललाभाप्रोत्तरचरितं श्रीहर्षेण न वर्णितमित्यादि ज्ञातव्यं । न इति पचेऽस्मदोर्द्वयोश्चेति (पा० १। २।५९) द्वित्वेऽपि बहुवचनं ॥ १५० ॥

श्रीहर्षमिति। पूर्वार्द्धार्थः स्पष्टः। द्वाविंशतेः पूरणः सर्गो गतः समाप्तिं प्राप। किम्भूतस्य श्रीहर्षस्य। नवो यः साहसाङ्को नाम राजा तस्य चरिते विषये चम्पूं गद्यपद्यमयीं कथां करोतीति कृत् तस्य विनिर्म्मितवतः सोऽपि ग्रन्थो येन कृत इति सूच्यते। नृपसाहसाङ्केति पाठे नृपश्चासौ साहसाङ्कश्च तस्य गौडेन्द्रस्य चरिते विषये, चम्पूकृतो भोजराजस्य विक्रमार्कस्य वेति केचित्। द्वाविंश इति पूरणे डटि टिलोपः ॥ १५१ ॥

यथेति। यथा परमरमणीयाऽपि रमणी यूनस्तरुणस्य कामिनोऽन्तःकरणं कुरुते तद्वत् तथा कुमाराणां बालिशानां वीरलाभमात्रेण परमपुरुषार्थप्राप्तिमभिमन्यमानानामननुभूतकामसुखानां चित्तं स्ववशं कैव कुरुते, अपि तु न काऽपि, तथेयं का-

मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥ १५२ ॥
दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं
तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बरां।

स्वरचनारूपा परमरमणीया मदुक्तिरपि श्रवणमननादिवशात् सुधीभूय, अमृतत्वं प्राप्य सुधियः सकलदर्शनरहस्यवेदिनोऽतिसरसस्य पण्डितस्य चेतश्चेयदि मदयति आनन्दयति तर्ह्यस्याः सुधियोऽत्यादृताया मदुक्तेररसानां नीरसानां सर्व्वथैवासंस्पृष्टरसशब्दानामपि चलदुपलप्रायाणामल्पणाद्यपुच्छपशूनां पुरुषाणामनादरभरैस्तत्कृतावज्ञासमूहैः किं नाम स्यात्, अपि तु न किञ्चिदप्यस्यास्तैरपकर्त्तुं शक्यते। सुधीभिरादरे कृते सति नीरसैरकृते वाऽप्यादरे न किञ्चिदित्यर्थः। सुधीभिरादृतत्वात् सकलगुणपूर्णातिसरसेयं मदुक्तिरिति भावः। मदुक्तेः सुधारूपत्वाभावात् चोदानन्तरस्य सरसत्वप्रतीतेः सुधात्वात्। सुधीभूयेति च्विः। सुधिय इति जात्यभिप्रायेणैकेनापि सुधिया आदरे कृते महद्गौरवं, बहुभिरप्यज्ञैरनादरेषु कृतेष्वपि न किञ्चित् लाघवमित्यभिप्रायेण वा। यून इति प्रतियोगिन एकवचनान्तत्वादेकवचनं। कवेः स्वग्रन्थमुद्दिश्येयमुक्तिः ॥१५२॥

कविरर्थान्तरोक्त्या स्वीयामुक्तिं वर्णयति। दिशीति। गिरिग्रावाणोऽद्रिपाषाणाः दिशि दिशि स्वां निजां सरस्वतीं नदीं अन्तर्गतजलप्रस्रवणां वमन्तु मुञ्चन्तु, आपातेन समन्तादूर्द्ध्वदे-

स परमपरः क्षीरोदन्वान् यदीयमुदीर्य्यते
मथितुरमृतं खेदच्छेदि प्रमोदनमोदनं ॥ १५३ ॥

शादधःपतनेन स्फुरन् प्रकाशमानो ध्वनिडम्बरः शब्दाडम्बरो यस्याः तां च नदीं मिथस्तुलयतु, अन्यनद्या समीकरोतु जन इत्यर्थः। अथ वाऽऽपाते प्रथमारम्भ एव स्फुरद्ध्वनिडम्बरां स्फुरत्प्रपातघोषां तां जनो मिथस्तुलयतु, उभयव्याख्यानेऽपि परिणामे तु न नदी न च तस्याः शब्दाडम्बरश्चिरन्तन इत्यर्थः। स क्षीरोदन्वान् परं केवलमपरो न विद्यते पर उत्कृष्टो यस्मादत्युत्कृष्टोऽथ वाऽन्य एव यतो यस्य क्षीरोदस्येदं यदीयममृतमेतादृशमुदीर्य्यते उत्पद्यते। कीदृशं। मथितुर्देवादेः खेदच्छेदि मथनजनितक्लेशापहं। तथा प्रमोदनं नितरामानन्ददायि, तथा ओदनं भक्तमास्वाद्यसिद्धान्नरूपं, अथ चैवम्भूतं परमुत्कृष्टममृतं यदीयमुदीर्य्यते स क्षीरोदन्वानपरः परोऽन्यो नास्ति किन्त्वेक एव। अथ च प्रतिदिशं सर्व्वदेशेषु गिरिवाण्यां विषये पाषाणतुल्या जडा अन्ये कवयः स्वीयां वाणीमुद्गिरन्तु, आपातेन प्रतिभामात्रेण स्फुरन् ध्वन्याख्यकाव्यविशेषस्याडम्बरो यस्यां प्रथमारम्भ एव स्फुरन् शब्दाडम्बरोऽनुप्रासो यत्र वा तां वाणीं मिथोऽन्योऽन्यं जनः समीकरोतु तस्य कवेरुक्तिरस्यैवास्य च तस्यैवेत्येव तुलयतु। आपात इति विसर्जनीयान्तपाठे। आपातः प्रतिभासः तां तुलयत्वित्यर्थः। एवंविधं परं काव्यामृतं यदीयमुत्पद्यते स क्षीरसमुद्रतुल्यः श्रीहर्षकविः, अपरो नास्ति किन्त्वेक एव, अन्ये कवयः पर्व्वतग्रावतुल्याः; अहं

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञंमन्यमना हठेन पठितो माऽस्मिन् खलः खेलतु।

श्रोतृवर्गस्तु क्षीरसमुद्रतुल्य इत्यर्थः। यथा क्षीरसागरो नीरा-र्थिनोऽपि नीरमात्रदानात् क्षीरेण तर्पयति लक्ष्मीकौस्तुभामृता-दिभिः परमानन्ददायिभिः कृतार्थयति, मदीयकाव्यविचारक-स्यैव खेदच्छेदि प्रमोदनवचनामृतमुत्पद्यते नान्यकाव्यविचारक-स्येत्यन्ये यावतुल्या क्षीरोदतुल्यश्चाहमिति भावः॥ १५२॥

इदानीं प्रसादरूपमुख्यगुणाभावादतिदुर्बोधत्वादकाव्यमि-ति ये वदन्ति तच्छङ्कामपनुदन् खलदर्पदलनार्थं गुरुसम्प्रदा-येन विना दुर्बोधमित्यतिगाम्भीर्य्यप्रतिपादनार्थञ्च बुद्धिपूर्व्वमेव मयेदं काव्यं तत्र दुर्बोधं व्यरचीत्याह। ग्रन्थेति। आत्मानं प्राज्ञं मन्यते प्राज्ञंमन्यं मनो यस्यैवंविधोऽस्मिन् काव्ये हठेन स्वीयप्रज्ञाबलेन पठितमस्यास्ती पठितीदंकाव्यस्य पाठकः खलो मा खेलतु किमत्रास्ति अश्रुतमेव व्याकर्त्तुं शक्यते इत्यवज्ञा-पूर्व्वं दर्पाभिव्यक्तिं माकार्षीदित्येवमर्थः। इह काव्ये क्वचित् क्वचिदपि तत्र तत्र स्थले मया प्रयत्नात् बुद्धिपूर्व्वं ग्रन्थग्रन्थिर्ग्रन्थ-मानशब्दार्थकुटिलिकाऽन्यासि विन्यस्ता खलमुखभञ्जार्थं बुद्धि-पूर्व्वं मयेदं काव्यं दुर्बोधं व्यरचि न तु प्रसन्नकाव्यकरणाशक्ते-रित्यर्थः। क्वचित् क्वचिदपीत्यनेन तत्र प्रसन्नताऽप्यस्तीति न काव्यत्वहानिरिति सूच्यते। सज्जनस्य तु ग्रन्थविवेचनोपाय-माह। श्रद्धेति। श्रद्धया गुरौ दैवतैकबुद्ध्या राद्धेन पूजितेन

अद्वाराद्गुरुग्रन्थीकृतदृढग्रन्थिः समासादय
त्वेतत्काव्यरसोर्म्मिमज्जनसुखव्यासज्जनं सज्जनः ॥ १५४ ॥
ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वराद्
यः साक्षात् कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवं ।

गुरुणा पूर्व्वमसुगमा अपि ग्रन्थाः कृता व्याख्यया सुबोधाः कृता दृढाः स्वरूपतो दुर्बोधा ग्रन्थयोऽस्मिन् स गुरुसम्प्रदायावगतार्थो-ऽत एव दर्पराहित्यात् सज्जनः साधुरेतत्काव्यस्य रसोर्म्मिरमृतलहरी तस्यां मज्जनं तज्जनितसुखेषु विशेषेण व्यासमन्ताद्भा-वेन च मज्जनमवस्थानं समासादयतु प्राप्नोतु, गुरुपरम्परया-ऽपि विना एकस्यापि पदस्यार्थो बोद्धुं न शक्यते तस्माद् गुरुप-रम्परया एवाध्येयमिदं काव्यमित्यर्थः। यश्चेदं गुरुपरम्परया अधीते स सततं सुखी भवति इति महाकविस्तस्याशिषं ददा-ति। अस्मिन् पठितीत्यस्य च विषयस्येति कर्म्मणि सप्तमी। आ-राद्भेति राधेरनुदात्तत्वादिड्भावः ॥ १५४ ॥

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते। ताम्बूलेति। यः कान्यकुब्जेश्वरात् सकाशात् सकलपण्डिताधिक्य-व्यञ्जनं ताम्बूलद्वयं विद्वद्योग्यमासनञ्च लभते। न केवलं राज-पूज्य एव किन्तु यः समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रमोदार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षा-त्कुरुते। न परं पूर्व्वोक्तगुणविशिष्टो ब्रह्म विदेव किन्तु यदीयं काव्यं मधुवर्षि, अतिसरसत्वादमृतवर्षि। न परं पूर्व्वोक्तगुणविशि-

यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियं ॥ १५५ ॥

हि ऽतिसरसो महाकविरेव, किन्तु तर्कशास्त्रेष्वपि यस्योक्तयः धर्षिताः पराभूताः परे प्रतिवादिनो याभिस्ताहृश्यः। तस्य विद्वच्चूडामणेः श्रीहर्षकवेरियं काव्यरचनारूपा कृतिः सुकृतिनां सुधियां मुदे आनन्दायाभ्युदीयात्, कृतिनामानन्दं कुर्व्वती सती आकल्पमतिवृद्धिं प्राप्नुयादित्याशीः। सर्व्वत्र यच्छब्दनिर्व्वाहो गुण एव। अभ्युदीयादिति इण् गताविव्यस्य रूपं ॥ १५५ ॥

सन्तः सन्तु परप्रयोजनकृतः कल्पद्रुमन्तः सदा
यस्मिन्नेव पथि प्रवर्त्तनपराः सत्कीर्त्तयस्वापरे।
अन्ये निःस्पृहणाश्रितश्रुतिपथा दीव्यन्तु भव्याशयाः
काकन्तः कलहप्रियाः खलजना नश्यन्तु जीवन्तु वा ॥
वासनामस्य रामस्य किङ्करस्य जगत्पतेः।
न चेत्पूरय कल्पेश कल्पते तव किङ्करः ॥

इति श्रीवेदरकरोपनामकश्रीमच्चरसिंहपण्डितात्मजनारायणकृते उत्तरनैषधीयप्रकाशे द्वाविंशतितमः सर्गः ॥ २२ ॥

समाप्तोऽयं ग्रन्थः ॥

---

# उत्तरनैषधसूचिपत्रं ।

## कथासन्दर्भः ।



## अथ त्रयोदशसर्गारम्भः ॥

## अथ चतुर्दशसर्गारम्भः ॥

अथ पञ्चदशसर्गारम्भः ।

अथ षोडशसर्गारम्भः ॥

अथ सप्तदशसर्गारम्भः।

# उत्तरनैषधस्य शुद्धिपत्रं।

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | ८।१२ | स्वयम्बरो | स्वयंवरो |
| ६ | ८ | निघेधा | निषेधा |
| ७ | १७ | गामीति | गामीनि |
| ७ | २० | आगाधे | अगाधे |
| ९ | ३ | वन्दि | बन्दि |
| ९ | २।२०।२२ | विम्ब | बिम्ब |
| | | अत्र पुस्तके यत्र यत्र स्वयम्बरेति विम्बेति दृश्यते तत्र तत्र स्वयंवरेति बिम्बेति ज्ञातव्यं | |
| १० | ५ | रम्भा | रम्भा |
| १० | १२ | षष्ठी | षष्ठी |
| १२ | १८ | न | तु |
| १३ | १८ | वघ्नं | वंघ्नं |
| १५ | २० | वह्निः | वह्निः |
| १८ | २१ | वचदीय | वचनीय |
| १९ | २१ | लापि | लपि |
| ६६ | २१ | वल्लभ | वल्लभ |
| ७२ | १३ | वेलायां | वेलायां |
| ७२ | १७ | नृत्य | नृत्य |
| ७३ | १० | भस्माच्छरैणे | भस्माच्छरणे |
| ७४ | २ | त्यजत्येव | त्यजत्येव |
| ७५ | २० | धवल | धवल |
| ८० | १४ | पृष्ठं | पृष्ठं |
| १०९ | १० | अवखण्डयति | अवखण्डयति |
| ११९ | १३।२० | निविड। विन्दु | निविड। बिन्दु |
| १२६ | ९ | वह्निः | वह्निः |
| १५७ | १४ | वज्रमुष्टि | वज्रमुष्टि |
| १५९ | १४ | सम्वाद | संवाद |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १८३ | १८ | सम्वलित | संवलित |
| १८७ | ४ | सम्विभाग | संविभाग |
| १८८ | ४ | बिडौजः | विडौजः |
| १९३ | १५ | नवल | नवाव |
| १९५ | १५ | युक्तान्तर | युक्त्यन्तर |
| २०८ | ११ | गुङ्कूला | गुङ्कूल |
| २१८ | ६ | धूमावलि | धूमावलि |
| २३५ | १३ | विभ्रतो | बिभ्रतो |
| २३७ | ४।६।१३ | दीपाया। निम्बाक्ष-वयवस | दीपया। निम्बाक्ष-वयरस |
| ” | १३ | कवयवस | कवयरस |
| २५२ | १४ | अकालिक | आकालिक |
| २७० | १६ | उदीता | उदीरिता |
| २७७ | ६ | ववाधे | बबाधे |
| २९५ | १२ | परस्येरेव | परस्परेव |
| २९७ | ६ | सर्व्वाऽपि | सर्व्वा अपि |
| २९९ | १७ | घमु | घमु |
| ३०१ | ५ | विभ्रावाः | बिभ्रावाः |
| ३३५ | २३ | इंत्यनुमान | इत्यनुनाम |
| ३४० | २१ | अभोच्यत् | अभोच्यत |
| ३५६ | २० | कुर्व्वंत् | कुर्व्वंन् |
| ३५८ | ५ | विधुत्वती | विधुन्वती |
| ३६१ | ३ | धुनुर्विद्या | धनुर्विद्या |
| ” | १० | हासितुर्वच्चसि | हसितुर्वचसि |
| ३६५ | १७ | ऊर्द्धोक्षत | ऊर्द्धोक्षत |
| ३७२ | १४ | मर्वुधेन | मर्युधेन |
| ३७६ | ७ | एवंम्भूतेन | एवम्भूतेन |
| ३८१ | १२ | काराठक | कपाटक |
| ३८४ | ६ | तद्दय | तद्वय |
| ३८४ | १५ | वङ्कनि | बङ्कनि |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ३८५ | ७ | द्वैमत्यात् | वैमत्यात् |
| ३८५ | १४ | दुभेऽपि | दुभे अपि |
| ३८७ | १७ | अपहरत् | अपहरन् |
| ३९४ | ८ | मुक्ये | मुक्तो |
| ३९९ | १० | वारम्बारं | वारंवारं |
| ४०८ | १३ | ऽत एव | अत एव |
| ४२२ | १४ | वधभयं | बधभयं |
| ४२६ | ५ | करोत्युचैरंङ्गनं | करोत्युचैरङ्गनं |
| ४३२ | १६ | वाल्ये | बाल्ये |
| ४३३ | २ | उज्वल | उज्ज्वल |
| ४५१ | ३ | श्यूनोऽ | श्यूनोऽहं |
| ४५४ | १५ | लज्जितः | लज्जितां |
| ४५८ | १५ | पण्डितमन्यैः | पण्डितम्मन्यैः |
| ४६८ | १६ | सशरीरं | अशरीरं |
| ४७७ | १९ | रूढयाः | रूढायाः |
| ४८५ | १० | छ्याकीर्सं | कथाकीर्सं |
| ४९४ | १४ | चार्वाकं | चार्वाकः |
| ४९६ | १२ | छेन | छेन |
| ४९७ | ९ | शिखिन्नपे | शिखिन्नपे |
| ५०७ | १५ | हर्ष्यांजुषः | हंर्ष्यांजुषः |
| ५१५ | ५ | तादृशं भक्ति | तादृशभक्ति |
| ५३९ | ६ | गालीप्रदानमेव | गालिप्रदानमेव |
| ५४२ | १२ | कर्त्तभिप्राये | कर्त्रभिप्राये |
| ५५३ | १७ | दृष्ट्वा | दृष्ट्वा |
| ५५५ | ४ | ददर्शकं | ददर्शकं |
| ५६० | ४ | छ्द। छाया | च्छद। च्छाया |
| ” | १९ | भावक्तता | भावक्तत्ता |
| ” | २० | प्रसून। उज्वल | प्रसूनै। उज्ज्वल |
| ५६४ | ११ | मलितं | मलिनं |
| ” | १६।१८ | अचार्या | आचार्य्या |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ५६६ | ७ | मृद्या | मृद्या |
| ५७४ | ११ | नम्नयोरंते | नम्नयोरते |
| ५७६ | ११ | वाद्यविशेष | वाद्यविशेष |
| ५८२ | ६ | ग्रथितैः | ग्रथितैः |
| ५८५ | ४ | रंति | रति |
| ५८७ | ३ | न प्राप्तं चाल्पं प्रापीत्यर्थः। | प्राप्तं चाल्पं न प्रापीत्यर्थः |
| ५६८ | १ | मूलदसोथ | मूलमदसोथ |
| ६०८ | २ | वागुपमर्दे | वाक्सोपमर्द |
| ६१६ | १५ | स तेन | सा तेन |
| ६२० | १५ | धृनति | धृति |
| ” | १८ | विस्रंस्य | विस्रस्य |
| ६२२ | ११ | दिव्ययुवतेरम्भा | दिव्ययुवतेरम्भा |
| ” | १२ | मेति | सेति |
| ६२५ | १४ | केलतीमदनयोरंतिकामयो। | केलतिमदनयोरतिकामयो |
| ६४२ | २० | यस्याः | यस्य |
| ६४३ | १४ | वीणात् | वीत्वणात् |
| ६८८ | १५ | भ्राघ्राणां | भ्रघ्राणां |
| ६६६ | १४ | छवि | च्छवि |
| ७५० | १० | नञाः | नञः |
| ” | ६ | वा | चा |
| ७५५ | १३ | विच्छेता | विच्छेता |
| ७७२ | ६ | मैव | सैव |
| ७७६ | २२ | दृष्टु | अष्टु |
| ७७६ | २० | हृदस्य | हृदयस्य |
| ७६६ | १५ | स्याप | स्वप |
| ८१० | १७ | दन्त्वादेशा | दन्त्वादेशा |
| ८१४ | ५ | सृष्टु | सृष्टु |
| ८२४ | २१ | मुखास् | मुखात् |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ८३२ | ५ | पूर्णं | पूर्णा |
| ८४२ | १ | बधित | बध्नित |
| ८६० | १२ | मग्मः | गग्मिः |
| ८७२ | १ | निवेद्ये | निवेद्ये |
| ८७७ | १८ | म्नत | त्वत |
| ८९३ | १ | दज | प्यज |
| ८९९ | ४ | बबन्ध | बबन्ध |
| ९०० | १ | गर्हं | गर्हें |
| ९०२ | १३ | रजु | ऋजु |
| ९०५ | १८ | विभ | बिभ |
| ९०७ | १६ | ह्लि | ह्लि |
| ९०८ | १७ | वऊ | वऊ |
| ९१६ | ६ | यय् | यद् |
| ९५१ | ६ | समौद्भृत्यं | समौद्धतं |
| ९६३ | १२ | नयनान्दकारिबं | नयनानन्दकारिबं |
| ९६६ | ९ | गन्तु | गन्तुं |
| ९६९ | १९ | त्वद्भुवौ | त्वद् भुवौ |
| ९७४ | ३ | रज्वा | रज्ज्वा |
| ” | १२ | विघ्ने | विघ्नेवे |
| ९७९ | १० | भिन्दतीति | भिन्दन्तीति |
| ९८३ | १४ | मृगमतां | मृगयतां |
| ९८५ | २ | रागय | रागेव |
| १०११ | १३ | घोज्वलैः | घोज्ज्वलैः |
| १०२७ | ९ | उपयानन्तर | उदयानन्तर |
| १०३१ | ६ | बत्वा | बत्त्वा |
| १०३५ | १८ | उपचिचोपि | उपचितोपि |
| १०३८ | १३ | पौष्टिकाति | पौष्टिकानि |
| १०४५ | २।८ | विभर्त्ति | बिभर्त्ति |
| १०४७ | २ | बिधिना | विधुना |
| १०४८ | १८ | याथात्म्य | याथार्थ्यं |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
| --- | --- | --- | --- |
| ” | ” | सुखे | मुखे |
| १०३९ | ७ | त्वम्मु | त्वम्मुखं |
| १०५० | १ | सुनि | स्तुनि |
| १०५६ | १६ | पद्दौ | पद्मौ |
| १०७१ | ९ | अमाज्ञ | अज्ञान् ज |
| १०७४ | ५।१७ | विभ | बिभ |
| १०८७ | १७ | नन्यनुभवे | नन्वनुभवे |
| १०८८ | ५ | तुवङ्गोपे | त्ववष्टोपे |
| १०९१ | १ | खत्र | खलु |
| ११०२ | २० | मनुभूत | मननुभूत |